श्रीः ।

# कुदृष्टिध्वान्तमार्त्तण्डः ।

## ( तत्र प्रथमो मयूखः )

श्रीमद्वेदमार्गप्रतिष्ठापनाचार्य-श्रीवेङ्कटाद्रि-
श्रीमदनन्तपुरुषाचार्यदिव्यसिंहासनासी-
नश्रीमद्रङ्गाचार्यस्वामिभिर्विरचितः ।

सचायं

खेमराज श्रीकृष्णदास इत्यनेन

मुम्बापुर्यां

स्वकीये "श्रीवेङ्कटेश्वर" मुद्रणागारे

मुद्रापितो विजयतेतराम् ।

संवत् १९५६, शके १८२१.

श्रीरस्तु ।

श्रीमद्वेदमार्गप्रतिष्ठानापचार्यश्रीवेङ्कटाद्रिश्रीमदनन्त-पुरुषाचार्यदिव्यसिंहासनासीन श्रीरङ्गाचार्यस्वामिभिर्विरचिते विरोधवरूथिनी प्रमाथिनि "कुदृष्टि-ध्वान्तमार्तण्डे" सप्तविंशतिमयूखे प्रथमोऽयं मयूखः ब्रह्मणः पारमार्थिकजगन्निमित्तोपादानकारणत्वस्थापन-परः श्रीमद्वेदमार्गप्रतिष्ठापनसभाप्रवर्तनोद्युक्तैस्तैरेवस्वामिभिः ॥

मोहमय्यां नगर्यां श्रीकृष्णदासात्मज-खेमराजेन स्वकीये'श्रीवेङ्कटेश्वर'मुद्राशालायाम्मुद्रापितो विजयते.



## कुदृष्टिध्वान्तमार्तण्ड शुद्धि पत्रम्।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | ३ | हतु | हेतु |
| ५ | ७ | चिद्वस्तु | चिदचिद्वस्तु |
| ६ | ७ | त्रक | कत्र |
| ७ | १४ | गधं | गन्धं |
| ११ | ७ | क्कां | छां |
| ११ | ८ | क्कां | छां |
| १२ | ६ | वत | वतः |
| १६ | ९ | रोपि | रेपि |
| २२ | २ | वृद्धा | वृद्धच |
| २२ | ५ | कारः | कार |
| २२ | १२ | गत | गतः |
| २९ | १३ | राण | राणां |
| ३० | २२ | तथ | तथा |
| ३६ | १८ | माग्नौ | मग्नौ |
| ४१ | २ | रूप | रूप |
| ४८ | १२ | जन्य | जन्या |
| ६३ | १३ | निषेध | निषेधः |
| ७६ | ६ | कांशे | कांशो |
| ७८ | १६ | वो। वि | वो वि |
| ८५ | १५ | त्वये | त्वयो |
| ८६ | २१ | मिथ्य | मिथ्या |
| ८८ | २ | निवह | निर्वह |
| ९१ | १ | धिकाया | धिका |
| ९४ | १२ | रीति | रीतिं |
| ९४ | २० | आवश्यक | आवश्यकः |
| १०७ | २ | मार्तण्ड | मार्तण्डप्रथममयूखः |
| १०७ | ३ | समाप्त | समाप्तः |

श्रीः ।

श्रियः कान्ताय नमः । श्रीमते विष्वक्सेनाय नमः ॥

श्रीमते रामानुजाय नमः॥श्रीमदनन्तार्यमहागुरवेनमः॥

श्रीमते वरवरमुनये नमः ।

# अथ कुदृष्टिध्वान्तमार्तण्डः ।

## तत्र प्रथममयूखः ।



श्रीवेङ्कटाद्रिनिलयः कमलाकामुकः पुमान् ॥ अभङ्गुरविभूतिर्नस्तरङ्गयतु मङ्गलम् ॥ १ ॥ सीमातिलङ्घिमहिमा श्रीमान्रामानुजो मुनिर्जीयात् ॥ भिन्दति हन्दि खलानां सिंहः करिणामिव स्मृतो योऽसौ ॥ २ ॥ श्रीमान्वैदिकमार्गकण्टकसमुद्धारैकदीक्षाधरो यश्श्रीवेङ्कटशैलनाथकरुणापूरे पयोमानुषः ॥ श्रीरामानुजयोगिपादकमलस्थानाभिषेकं गतो जीयात्सोऽयमनन्त पूरुषगुरुस्सिंहासनाधीश्वरः ॥ ३ ॥ श्रीरङ्गसूरिः श्रीशैले तस्य सिंहासने स्थितः ॥ कुदृष्टिध्वान्तमार्तण्डं प्रकाशयति सम्प्रति ॥ ४ ॥ मायावादिमयोलूक मदामोदविकर्तनः ॥ कुदृष्टिध्वान्तमार्तण्डः प्रकटोऽयं विजृम्भताम् ॥ ५ ॥ विशिष्टाद्वैतसिद्धान्ती वेदान्ताचार्य आदधौ ॥ मायावादिमतध्वंसनिपुणां शतदूषणीम् ॥ ६ ॥ उमामहेश्वराख्यस्तमनुकुर्वन्नगात्कुदृक् ॥

जडोऽयमपि भाषापातिनापि दोषलेशशङ्कासहिष्णुतया प्यसम्भाष्यं श्रीभाष्यं दूषयितुकामो दोषगणमारोपय न्स्वमस्तके स्वयमेव दुर्भरं भारं प्रपातयत्यवर्जनीय मितीह निरूप्यते ॥ १३ ॥ अत्र प्रथमं तावददसीय ग्रन्थरचनायोग्यता किञ्चित्परीक्ष्यते प्रेक्षावतां प्रदर्श नाय ॥१४॥ यदाह वरूधिनीकारः॥ भगवता हि मीमां साशास्त्रकारेण "विप्रतिषेधाच्चासमञ्जसम्"[२ । २ । ९] इत्यस्मिन्सूत्रे विप्रतिषेधार्थकथनं साङ्ख्यसूत्रासामञ्ज स्यकारणमित्यभाणि ॥ अतश्शतं विरोधानां भाष्ये रामानुजेरिते दुरुद्धरं हरेणापि हरिणापि निरूप्यते इति ॥ १५ ॥ तदिदं प्राथमिकं प्रतिज्ञावाक्यमेकमेवाद सीयं योग्यतासर्वस्वं स्फुटयति ॥ १६ ॥ अत्रहि विप्रतिषिद्धार्थकथनमिति वक्तव्ये विप्रतिषेधार्थकथनमित्यभिधानं धर्मधर्मिविवेकाभावनिबन्धनमिति स्पष्टम् ॥ १७ ॥ यतो विप्रतिषिद्धार्थकथनमेव साङ्ख्यशास्त्रासामञ्जस्यकारणं नतु विप्रतिषेधरूपार्थकथनम् ॥ नच स्वोक्तार्थविप्रतिषेधलक्षणोऽप्यर्थस्साङ्ख्यशास्त्रे प्रतिपादितोऽस्ति ॥१८॥अपि चास्मिन्वाक्ये मीमांसा कारेण विप्रतिषिद्धार्थकथनस्य साङ्ख्यशास्त्रासामञ्ज स्यकारणत्वाभिधानमत इत्यनेन हेतुतयोपादाय तद्धेतुकत्वं श्रीभाष्ये दुरुद्धरविरोधशतनिरूपणे प्रतिपाद्य मानं कथं नु नाम सङ्गच्छते ॥ अन्येनान्यत्र दोषकथन

स्य स्वयमन्यत्र विरोधकथनं प्रति हेतुत्वासम्भवात् । वस्तुतस्तत्र विरोधसद्भावस्यैव तत्र विरोधकथनं प्रति हेतुत्वसम्भवाच्च ॥ १९ ॥ अतो मीमांसाकारेण साङ्ख्य शास्त्रे विप्रतिषिद्धार्थप्रतिपादकत्वेनासामञ्जस्य कथनाच्छ्रीभाष्ये दुरुद्धरविरोधशतमहं ब्रवीमीतिवदन्नयं लोकैश्चन्द्रे कलङ्कित्वेनासौन्दर्यवर्णनाच्चण्डभानौ दुरुद्धरं कलङ्कशतमहं ब्रवीमीति वदन्निवासम्बद्धहेतुहेतुमद्भावकथनेन कथङ्कारं सर्वलोकहासास्पदं न भवेत् ॥ २० ॥ ईदृश्या च निजग्रन्थरचनायोग्यतया श्रीभाष्यं बिभित्सुमिमं लोष्टप्रक्षेपेणार्कमण्डलमम्बरादधः पिपातयिषुमिवानुन्मत्तं न कश्चिद्विपश्चिज्जानीयात् ॥ २१ ॥ अदसीयग्रन्थरचनाचातुर्यसर्वस्वं स्थालीपुलाकन्यायेनाखिलविदुषामवगमयितुं दिङ्मात्रमिदमिह दर्शितं ग्रन्थविस्तरभिया ॥ २२ ॥ इतः परन्त्वदसीयवाक्यप्रयोगासामञ्जस्यमस्पृशन्त एव वयं विपरीतमर्थांशमेव प्रत्याख्यास्यामः ॥ २३ ॥ जगत्सृष्ट्याद्यनुकूलसङ्कल्पज्ञानशक्त्यादिमत्त्वात्स्वस्यैव बहुभवनसङ्कल्पपूर्वकं स्वयमेव जगद्रूपेण बहुभवनाच्च जगतस्सर्वविधकारणं ब्रह्मेति हि त्रय्यन्तनिष्णाताभिमतो वेदान्तसिद्धान्तः ॥ २४ ॥ यत्तावदत्राह वरूथिनीकारः श्रीभाष्ये ॥ "शास्त्रयोनित्वात्" [ १ । १ । १३ ] इत्यधिकरणे ब्रह्मणो जगत्कारणत्वस्य वेदान्तप्रमाण-

कत्वमुक्त्वा "नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः" [ २ । ३ । १८ ] इत्यधिकरणे पुनस्तद्विरुद्धमुक्तम् ॥ १ ॥ उक्तं हि तत्र श्रीभाष्ये ॥ अतस्सर्वदा चिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्म ॥ तत्कदाचित्स्वस्माद्विभक्तव्यपदेशानर्हातिसूक्ष्मदशापन्नचिदचिद्वस्तुशरीरं तिष्ठति । तत्कारणावस्थं ब्रह्म । कदाचिच्च विभक्तनामरूपस्थूलचिद्वस्तुशरीरम् । तच्च कार्यावस्थम् । तत्र कारणावस्थस्य कार्यावस्थापत्तावचिदंशस्य कारणावस्थायां शब्दादिविहीनस्य भोग्यत्वाय शब्दादिमत्तया स्वरूपान्यथाभावरूपविकारो भवति । चिदंशस्य च कर्मफलविशेषभोक्तृत्वाय तदनुरूपविज्ञानविकासरूपविकारो भवति । उभयप्रकारविशिष्टे नियन्त्रंशे तदवस्थतदुभयविशिष्टतारूपविकारो भवति । कारणावस्थाया अवस्थान्तरापत्तिरूपो विकारः प्रकारद्वये प्रकारिणि च समान इति ॥ २ ॥ अत्र चिदचिदंशयोरेव विकारित्वम् । ब्रह्मणस्तु विकारिवैशिष्टयमात्रम् । नतु विकारित्वमित्युक्तम् ॥ ३ ॥ इत्थमुक्त्वा विकारित्वे श्रुतिविरोधोप्युत्तरत्र प्रदर्शितः ॥ ४ ॥ तथाचोत्तरत्र भाष्यम् । अचिदंशवत्स्वरूपान्यथात्वाभावाभिप्राया उत्पत्तिप्रातिषेधवादिन्यो नित्यत्ववादिन्यश्च । न जायते म्रियते वेत्याद्याः नित्योनित्यानामित्याद्याश्च श्रुतयः स्वरूपान्यथात्वज्ञानसङ्कोचविकासरूपोभयविधानिष्ट

विकाराभावाभिप्रायाः । स वा एष महानज आत्माऽज रोऽमरोऽमृतोऽभयो ब्रह्म । नित्यो नित्यानामित्याद्याश्च परविषयाः श्रुतय इति ॥ ५ ॥ अत्र ब्रह्मणः कारणत्वं प्रतिषिद्धमित्यविवादम् । स्वरूपधर्मान्यथात्वलक्षणविकारद्वयशून्यस्य कूटस्थस्य कारणत्वासम्भवात् ॥ ६ ॥ इत्यारभ्य । ततश्च स्वरूपधर्मान्यथाभावलक्षणकारणत्वस्यैत्रक श्रुतिप्रतिषेध्यत्वाश्रयणादन्यत्र श्रुतिप्रमाणकत्वस्वीकाराच्च पूर्वापरविरोधो दुरुद्धरः ।"विरोधो बलवानेष जगत्कारणताश्रितः । अनेन परमेशानजगत्कारणता क्षता । छिन्नमूलद्रुमन्यायात्सकलं दर्शनं क्षतम् । विरोधं चेममुद्धर्तुमवधिर्ब्रह्मणो वयः" इत्यन्तेन ग्रन्थेन स्वबुद्ध्या दुरुद्धरत्वाभिमतं प्रथमं विरोधम् ॥ २५ ॥ तदेतत्सर्वं श्रीभाष्यपङ्क्त्यर्थानवधारणकारणत्वशब्दार्थानवधारणस्वीयदुरुच्छेदविपरीतदुर्वासनामूलत्ववर्जनीयतया स्वपक्षे संप्राप्नुवतो दोषस्य परपक्षे समारोपणमात्रमिति विपश्चितो विहसन्ति ॥ २६ ॥ यतश्शास्त्रयोनित्वाधिकरणभाष्योक्तस्यार्थस्य किञ्चिदपि विरुद्धम् । "नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः" इत्यधिकरणे प्रतिपादितम् ॥ २७ ॥ तथाहि । शास्त्रयोनित्वाधिकरण भाष्ये जगज्जन्मादिकारणत्वविशिष्टब्रह्मणश्शास्त्रप्रमाणकत्वमभिहितम् ॥ २८ ॥ आत्माधिकरणभाष्येऽपि तदेव ब्रह्मणः कारणत्वं परपक्षेषु ब्रह्मणस्तत्स्वीकारप्रा-

त्तानिष्टप्रसङ्गस्य स्वपक्षेनवकाशताप्रतिपादनपूर्वकमुपपादितम् ॥२९॥ इयदेव च तत्र विलोक्यते चक्षुष्मद्भिश्शब्दार्थविवेकिभिर्विद्वद्भिः । नतु तत्प्रतिषिद्धम् ॥ तत्कदाचित्स्वस्माद्विभक्तव्यपदेशानर्हातिसूक्ष्मदशापन्नचिदचिद्वस्तुशरीरं तिष्ठति । तत्कारणावस्थं ब्रह्म कदाचिच्च विभक्तनामरूपस्थूलचिदचिद्वस्तुशरीरम् । तच्च कार्यावस्थम् इति भाष्यपङ्क्त्या ब्रह्मणि जगत्कारणत्वस्य स्पष्टमभिधानात् ॥ उभयप्रकारविशिष्टे नियन्त्रंशे तदवस्थतदुभयविशिष्टतारूपविकारो भवति । कारणावस्थाया अवस्थान्तरापत्तिरूपो विकारः प्रकारद्वये प्रकारिणि च समान इति भाष्यपङ्क्त्या कारणत्वनिर्वाहौपयिकविकारसद्भावोपपादनात् ।अस्माकं तु स्थूलसूक्ष्मावस्थचिदचिद्वस्तुशरीरं ब्रह्म कार्यकारणोभयावस्थावास्थितमपि सर्वदा निरस्तनिखिलदोषगन्धं सत्यसङ्कल्पत्वाद्यपरिमितोदारगुणसागरमवतिष्ठते॥प्रकारभूतचिदचिद्वस्तुगता अपुरुषार्थाः स्वरूपान्यथाभावाश्चेति सर्वं समञ्जसमित्युपसंहारभाष्यग्रन्थेन परपक्षप्राप्तदोषप्रसङ्गस्य स्वपक्षेनवकाशताप्रतिपादनाच्च यथोक्तार्थस्यैवोपलब्ध्या सर्वत्र ब्रह्मणो जगत्कारणत्वाभ्युपगमस्यैव दर्शनात् ॥ ३० ॥ इत्थं च तद्विरुद्धमुक्तमितिवर्णनम् ॥ अत्र चिदचिदंशयोरेव विकारित्वम् । ब्रह्मणस्तु विकारिवैशिष्ट्यमात्रम् ।न विकारित्वमित्युक्त

मिति वर्णनं च जात्यन्धबालिशभाषितमित्येव सिद्धम् ॥३१॥ इदं द्वितीयवर्णनन्तु।अनुपदमेव॥उभयप्रकारविशिष्टे नियन्त्रंशे तदवस्थतदुभयविशिष्टतारूपविकारो भवति । कारणावस्थाया अवस्थान्तरापत्तिरूपो विकारः प्रकारद्वये प्रकारिणि च समान इति पंक्तिमनूद्यैव क्रियमाणं वक्तुः पश्यतोहरत्वमप्यवगमयतीति विशेषः ॥ ३२ ॥ जीवात्मनः परमात्मनश्च मरणादिविकाराभावप्रतिपादकतया कतिपयश्रुत्युदाहरणपरभाष्यग्रन्थस्य परब्रह्मणः कारणत्वापवादकविकाराभावपरतयानुवादकरणन्तु भाष्यपंक्त्यर्थापरिज्ञानमूलम् । तत्र जीवात्मविषयतयोदाहृतश्रुतीनाम् । अचिद्वस्तुनि प्रसिद्धस्वरूपान्यथात्वलक्षणविकाराभावपरतायाः । परमात्मविषयतयोदाहृतश्रुतीनाम्।अचिद्वस्तुनि प्रसिद्धो यस्स्वरूपान्यथात्वलक्षणो विकारः । यश्च जीवात्मनि प्रसिद्धस्तदसाधारणधर्मभूतज्ञानसंकोचविकासलक्षणो विकारः । तादृशोभयविधानिष्टविकारविशेषाभावपरतायाश्च भाष्य एव प्रस्फुटत्वेन । ब्रह्मणि कारणत्वनिर्वाहकतया स्वरूपान्यथात्वलक्षणविकारविशिष्टाचिद्वस्तुस्वासाधारणधर्मभूतज्ञानसंकोचविकासलक्षणविकारविशिष्टचिद्वस्त्वेतदुभयविशिष्टत्वरूपो यस्तृतीयो विकार उक्तः । तदभावपरताया अदर्शनात् ॥ ३३ ॥ इदमत्रावधेयम्॥अचिद्वस्तुनि स्वरूपान्यथात्वलक्षणो

विकारोस्ति । जीवात्मनि धर्मभूतज्ञानसंकोचविकास-लक्षणविकारोऽस्ति । परब्रह्मण्युक्तलक्षणविकारविशि-ष्टचिदचिद्वस्तुवैशिष्ट्यलक्षणविकारोऽस्ति । तत्र प्रथम द्वितीयौ द्वावेव विकारावनिष्टरूपौ।न तृतीयः।उदाहृत-श्रुतिभिः प्रथमविकारो जीवात्मनि प्रतिषिध्यते । अ-निष्टरूपौ प्रथमद्वितीयौ द्वावेव विकारौ परमात्मनि प्रति षिध्येते न तृतीयः।कारणत्वनिर्वाहाय च यः कश्चिदेक एव विकारोऽपेक्षितः। न सर्वे।अतो ब्रह्मणि प्रथमद्वितीय विकारप्रतिषेधमात्रेण न कारणत्वं प्रतिषिद्धं भवति । तृतीयविकारेणैव तत्सिद्धेरिति ॥ ३४ ॥ अतः अत्र ब्रह्मणः कारणत्वं प्रतिषिद्धमित्यविवादम् । स्वरूपध-र्मान्यथात्वलक्षणविकारद्वयशून्यस्य कूटस्थस्य कार णत्वासम्भवादित्युक्तिः । ततश्च स्वरूपधर्मान्यथाभा-वलक्षणकारणत्वस्यैकत्र श्रुतिप्रतिषेध्यत्वाश्रयणादन्य-त्रश्रुतिप्रमाणकत्वस्वीकाराच्च पूर्वापरविरोधो दुरुद्धर इत्याद्युपसंहारोक्तिश्च श्रीभाष्यपंक्त्यर्थापरिज्ञानमूलै-वेति सिद्धम् ॥ ३५ ॥ किञ्चास्मत्पक्षोपरि दूषणकथा-प्रसङ्गे स्वरूपधर्मान्यथात्वलक्षणविकारद्वयशून्यस्य कूटस्थस्य कारणत्वासम्भवं वदता त्वया स्वेष्टमल-ब्ध्वैव प्रत्युत निजसदन एव हुतवहज्वाला निक्षिप्ता भवति । जगत्कारणतया वेदान्तसिद्धस्य ब्रह्मणस्तद-निर्वाहलक्षणदुर्भरमहादोषभारस्य स्वमस्तके स्वयमेव

स्थापितत्वात् ॥ ३६ ॥ जगतोऽपारमार्थिकत्वाद्ब्रह्म-स्वरूपस्य च कदाचिदप्यन्यथात्वाभावान्निर्विशेषत्वेन धर्मान्यथात्वस्यापि दुर्वचत्वाच्च केनापि प्रकारेण ब्रह्मणि विकारोपपादनासम्भवेन ब्रह्मणो जगत्कारणत्वप्रति-पादकवेदान्ताविरोधलक्षणस्स्वमतमूलकृन्तनो महानयं दोषस्तवैव खलु दुरुद्धरो निष्पद्यते ॥ ३७ ॥ यत्तु । ननु तवापि मते कूटस्थं ब्रह्म कारणमिति चेन्न । माया-यास्तत्कारणत्वं ब्रह्मण्यध्यारोप्यत इत्यभ्युपगमादिति स्वमते ब्रह्मकारणवादस्य निर्वाहकरणम् ॥ ३८ ॥ तदति-तुच्छम् । ईदृशनिर्वाहेण ब्रह्मणस्साक्षादेव जगत्कारणत्वं स्पष्टमुद्घोषयतो वेदस्य तन्मथननिस्सारितसकलसार तमार्थान्गर्भीकृत्य वेदविदग्रेसरेण भगवता बादरायणेन प्रणीतस्य शारीरकमीमांसाशास्त्रस्य चोन्मत्तजल्पित त्वापादकेन वज्रलेपायितस्योन्मत्तभावस्यैव परं तव सिद्धेः ॥ ३९ ॥ इदमत्रावधेयम् । अध्यारोपो नाम वस्तुतस्तस्मिन्नविद्यमानस्यान्यत्रैव सतो धर्मस्य तस्मि-न्विद्यमानतया प्रतिपादनमेव ॥ १ ॥ तथाविधप्रतिपाद नपरत्वं च ॥ यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजि-ज्ञासस्व । तद्ब्रह्मेति । [ तै० । ३ । १ । ] तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः [ तै० । २ । १ । ] सोकामयत । बहु स्यां प्रजायेयेति । स तपोतप्यत । स

तपस्तप्त्वा। इदꣳसर्वमसृजत। यदिदं किञ्च। तत्सृष्ट्वा। तदेवानुप्राविशत्। तदनुप्रविश्य। सच्च त्यच्चाभवत् [ तै०।२।६।] सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्॥ तदैक्षत बहु स्यां प्रजायेयेति। तत्तेजोऽसृजत तत्तेज ऐक्षत। बहु स्यां प्रजायेयेति। तदपोऽसृजत॥ता आप ऐक्षन्त बह्व्यस्स्याम प्रजायेमहीति। ता अन्नमसृजन्त। [ छां०।६।२।२।३।४।] सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत। [ छां० [ ३।१४।१ ] इत्यादीनां ब्रह्मणो जगत्कारणत्वं प्रस्फुटमुद्घोषयतां परमप्रमाणभूतानां परश्शतानां वेदवचसां न कथंचिदपि वक्तुं शक्यम्॥ २॥ एवं सकलवेदान्तसारसमुद्धरणैदंपर्यप्रवृत्तेन भगवता बादरायणेनापि शारीरकमीमांसाशास्त्रे॥ जन्माद्यस्य यतः [ १।१।२ ] प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्। [ १।४।२३ ] योनिश्च हि गीयते [ १।४।२८ ] इत्यादिभिस्सूत्रैस्तदेव ब्रह्मकारणत्वं सम्यग्विचारपूर्वकं स्थापितम्॥ ३॥ इत्थं ब्रह्मणो जगत्कारणत्वं प्रस्फुटं प्रतिपादयतो वेदान्तगणस्य मीमांसाशास्त्रस्य च मायागतकारणताया ब्रह्मण्यध्यारोपेण प्रतिपादनपरत्वस्वीकारे चोन्मत्तजल्पितरूपत्वमप्रमाणत्वं च दुर्वारं प्रसज्यते॥४॥प्रमाणतया सर्वसम्प्रतिपन्नस्य शास्त्रस्येदृशत्वकथनेन तवैव परमुन्मत्तता स्थिरीकृता स्यात्

॥ ५ ॥ न तूक्तलक्षणस्य शास्त्रस्य तादृशत्वं केनचिद
ङ्गीक्रियेत ॥ ६ ॥ किञ्च ॥ सर्वलोकहितप्रदर्शनाय
प्रवृत्तं वेदादिकं शास्त्रं वस्तुतो ब्रह्मण्यविद्यमानं माया-
गतं कारणत्वं ब्रह्मण्यध्यारोप्य प्रतिपादयत्प्रागेव मुग्धं
लोकं पुनरपि किमर्थम्मोहयाति ॥ ७॥तथा प्रतिपादय
द्वा प्रतारकत्वं कथं नासादयति ॥ ८॥ इत्थं स्वभावत
कश्चिदर्थं प्रतिपादयतश्शास्त्रस्याध्यारोप्यप्रतिपादनप-
रत्ववर्णने सर्वत्रैव तथात्वशंकाप्रसङ्गेनाविश्वसनीयता-
या दुर्वारत या क्वचिदपि निर्विशंकं प्रमाणतया स्वीका-
रकथैव कथं नास्तमिता स्यात् ॥९॥ एवं ब्रह्मणो जग-
त्कारणत्ववादिनो वेदान्तस्येत्थमयथावस्थितार्थाभि-
धायकतायास्तात्त्विकत्वे वेदान्तरहस्यविवेचनैकप्रयो-
जनतया प्रवर्तिते मीमांसाशास्त्रे वा बादरायणेन कथं
नायमंशः प्रकटितस्स्यात् ॥१०॥ अपि च ॥ ईक्षतेर्ना-
शब्दम् [ । १ । १ । ५ । ] इत्यादिषु साङ्ख्यादिम-
तासिद्धं केवलप्रकृतेः कारणत्वं प्रत्याख्याय ब्रह्मण्येव
तत्स्थापनस्य शारीरकशास्त्रे बादरायणेन करणान्मा-
यागतं कारणत्वं ब्रह्मण्यध्यारोप्य वेदान्ताः प्रतिपादय-
न्तीति वादस्यावकाश एव नोपलभ्यते ॥ मायायामेव
कारणत्वाभावावगतेः । मायान्तु प्रकृतिं विद्यान्मा-
यिनन्तु महेश्वरम् [ श्वे० । ४ । १० । ] इत्यादिश्रुत्या

प्रकृतेरेव मायात्वावगतेश्च ॥ ११ ॥ तस्माद्ब्रह्मकारण तावादी वेदो मायागतं कारणत्वं ब्रह्मण्यध्यारोप्य प्रतिपादयतीत्येष वादस्सर्वथैवासङ्गत इति सिद्धं भवतीति ॥ ४० ॥ यदपि । यद्वा ब्रह्मणोपि स्वविषमसत्ताकमन्यथात्वमभ्युपगम्यते । वस्तुनस्तद्विषमसत्ताकोऽन्यथाभावो विवर्त इति मम मतम् । विवर्तवादाश्रयणादेव ब्रह्मणः कारणत्वसिद्धिः कौटस्थ्यहान्यभावश्चेति कथञ्चित्कल्पान्तरेण ब्रह्मकारणत्वसमर्थनम् ॥ ४१ ॥ तदपि तुच्छमेव त्वदीयस्य ब्रह्मविवर्तवादस्य विवेचनासहिष्णोर्विदग्धविबुधगोष्ठ्यां प्रकटयितुमेवानर्हत्वात्॥४२॥ अथ कोयं ब्रह्मणो विवर्तोनामेति विवेचयामः ॥ ४३ ॥ विभिन्नाकारेण वर्तनं विवर्त इति व्युत्पन्नस्य विवर्तशब्दस्य रूपान्तरापत्तावेव प्रसिद्धशक्तिकतया तस्याश्च प्रागवस्थातोऽवस्थान्तरापत्तिलक्षणविकार एव पर्यवसन्नत्वाद्विकारपर्यायान्यथात्वशब्देन विवर्तशब्दस्य त्वयैव व्याख्यायमानत्वाच्च विवर्तशब्दवाच्यावस्थाविशेषस्वीकारे ब्रह्मणो विकारित्वस्यैवाभ्युपगमसिद्ध्या त्वदभिमतं निर्विकारत्वलक्षणं कौटस्थ्यं क्व रक्षितम् ॥ ४४ ॥ इदं पुनरत्रावधेयम् । कौटस्थ्यं हि निर्विकारत्वरूपं त्वदभिमतम् ॥ १ ॥ तच्च ब्रह्मणो न सिध्यति । विवर्तरूपस्य विकारस्य कारणत्वनिर्वाहाय त्वयाप्यभ्युपगतत्वात् ॥ २ ॥ न च विकारविशेषाभाव

एव कौटस्थ्यम् । नतु विकारसामान्याभावः । इत्थञ्च पारमार्थिके ब्रह्मणि स्वविषमसत्ताकयोर्विवर्तशब्दितयोर्व्यावहारिकप्रातिभासिकविकारयोरभ्युपगमेपि स्वसमानसत्ताकपारमार्थिकविकारानभ्युपगमेन तदभावलक्षणं कौटस्थ्यं ब्रह्मण्यबाधितमेवेति वाच्यम् । विकल्पासहत्वात् ॥ ३ ॥ कौटस्थ्यशब्दार्थः किं पारमार्थिकविकाराभाव इत्युच्यते । आहोस्विद्विकारप्रतियोगिकाभाव इत्युच्यत इति पृच्छामः॥४॥नाद्यः।पारमार्थिकस्य विकारस्यैव त्वयानभ्युपगमेन प्रतियोग्यप्रसिद्ध्या पारमार्थिकविकाराभावशब्दाभिलपनीयस्य कस्यचिदभावस्यैवाप्रसिद्धेः॥ ५ ॥ न द्वितीयः । व्यावहारिके वस्तुनि प्रातिभासिकविकाराभावस्य प्रातिभासिके वस्तुनि व्यावहारिकाविकाराभावस्य च सम्भवेनेदृशकौटस्थ्यस्य प्रसिद्धविकारिष्वतिप्रसक्ततयाऽव्यावर्तकत्वात् । व्यावहारिकप्रातिभासिकविकारयोर्ब्रह्मण्यभ्युपगमेनैव तदभावासिद्ध्या ब्रह्मण एव कूटस्थताया दुर्लभत्वप्रसङ्गाच्च ॥ ६ ॥ एतेन ब्रह्मणि स्वविषमसत्ताकविवर्तलक्षणविकारस्वीकारेऽपि स्वसमानसत्ताकविकाराभावलक्षणं कौटस्थ्यं निर्बाधमित्यपि निरस्तम् । ब्रह्मसमानसत्ताकविकारस्यैव त्वयाऽनभ्युपगमेन प्रतियोग्यप्रसिद्ध्यैव तदभावस्याप्यसिद्धेश्च ॥ ७ ॥ किञ्च॥ ब्रह्मणि स्वविषमसत्ताकविकारस्वीकारेपि ॥ निष्कलं

निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ॥ श्वे० ॥ ६ ॥१९॥ इत्यादिश्रुतिविरोधो हि दुरुद्धर एव ॥ ताभिर्विकार सामान्याभावस्यैव प्रतिपाद्यमानत्वात् ॥ ८ ॥ त्वन्मत भाष्यकारेणापि विकारसामान्याभावरूपमेव कौटस्थ्यं प्रतिपाद्यते ॥ ९ ॥ तथोक्तमारम्भणाधिकरणभाष्ये ॥ ननु मृदादिदृष्टान्तप्रणयनात्परिणामवद्ब्रह्मशास्त्रस्या भिमतमिति गम्यते । नेत्युच्यते । स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म [ बृ० ॥ ६ ॥ ४ ॥ ॥ २५ ॥ ] स एष ने ति नेत्यात्मा [ बृ० ॥ ६ ॥ ४ ॥ ॥ २२ ] अस्थूलमनणु [ बृ० ॥ ५ ॥ ८ ॥ ८ ॥ ] इत्यादिभ्यस्सर्वविक्रियाप्रतिषेधश्रुतिभ्यो ब्रह्मणः कूट-स्थत्वावगमादिति ॥ कूटस्थं च ब्रह्म सर्वविक्रियाप्रति षेधादित्यवोचामेति च ॥ १० ॥ इत्थं कौटस्थ्यस्य विकारसामान्याभावरूपतायास्त्वद्भाष्यकारेणैव स्पष्ट-मभिधानाद्ब्रह्मणो विवर्तवादोऽयं त्वन्मतभाष्याकारा शयस्यापि विरुद्ध एव त्वयोच्यत इति सिद्धम् ॥११॥ न च कारणत्वश्रुतिविकारप्रतिषेधश्रुत्याविरोधाय परमा-र्थतो विकाराभावरूपमेव कौटस्थ्यमास्थीयते । नतु विकारत्वावच्छिन्नविकारसामान्याभावरूपम् । नचात्र प्रतियोग्यप्रसिद्ध्याऽभावाप्रसिद्धिः । घटत्वेन पटो नास्तीतिवत् । पारमार्थिकतया विकारो नास्तीति प्रतीतिसिद्धस्य पारमार्थिकत्वावच्छिन्नविकारनिष्ठप्रति

योगिताकस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैवाभ्युप गमादिति वाच्यम्।तथा सति तादृशाभावस्य केवलान्व- यितया सर्वविकारिपदार्थसाधारणत्वेनाव्यावर्तकत्वात्। विकारिभ्यो व्यावृत्तिप्रदर्शनायैव क्रियमाणस्य तत्र तत्र ब्रह्मणि कूटस्थत्वनिर्देशस्यासामञ्जस्यप्रसंगाच्च ॥१२॥ अथ कौटस्थ्यं विकारसामान्यात्यन्ताभाव एव । विवर्तश्च न विकारः। वस्तुनस्स्वविषमसत्ताकोऽन्यथा- भावो विवर्त इति मम मतम्। इत्थं च ब्रह्मणो विवर्त स्वीकारेपि न निर्विकारत्वरूपकौटस्थ्यहानिरिति चेन्न। दत्तोत्तरत्वात्। विवर्तविकारपरिणामान्यथात्वादिश- ब्दानां पूर्वाकारविभिन्नाकारपराणां पर्यायवाचकतया एव प्रसिद्धतया विवर्तविकारशब्दयोर्विभिन्नार्थकत्वस्य कथंचिदपि वक्तुमशक्यत्वाच्च ॥ १३॥ न चाश्रयाश्रयि सत्तासाम्यवैषम्याभ्यां विकारविवर्तशब्दितावस्थयो- र्वैजात्यं सुवचम्। स्वोत्तरत्वस्वसामानाधिकरण्योभ यसम्बन्धेनावस्थाविशिष्टावस्थात्वरूपविकारशब्दप्रवृ- त्तिनिमित्तस्य विवर्तशब्दाभिहितावस्थासाधारण्येन [illegible]रशब्दवाच्यतायाः दुर्वारतया तत्राश्रयाश्र- काराभाव[illegible]वैषम्ययोरकिञ्चित्करत्वात्। अन्यथावि ब्रह्मसमानसत्ता[illegible]तिपन्नानां घटत्वाद्यवस्थानामपि स्वा योग्यप्रसिद्ध्यैव तद[illegible]कत्वाभावेन विकारत्वासिद्धि- ब्रह्मणि स्वविषमसत्ताक विवर्तशब्दितावस्थातो विकार

शब्दितावस्थायाः कथञ्चिदपि भेदस्सुवचः॥१५॥एतेन विवर्तोऽपि विकार एव कामं भवतु । भवतु च ब्रह्मणस्तदाश्रयत्वमपि। ब्रह्मणःकूटस्थत्वव्यपदेशस्तु स्वसमानसत्ताकत्वस्वाश्रयत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकविकारसामान्यभावविषयः।प्राकृतपदार्थेषु विकृतत्वव्यपदेश उक्तोभयसम्बन्धेन विकारवैशिष्ट्यविषयः। इत्थञ्च नोक्तरीत्याऽभावाप्रसिद्धिःनापि चोक्तलक्षणकूटस्थत्वस्याव्यावर्तकताप्रसङ्ग इत्युक्तावपि न निस्तारः। प्रागुक्तरीत्या मृदादिद्रव्यस्य तदसमानसत्ताकाभिर्घटत्वाद्यवस्थाभिर्विकारित्वव्यपदेशानिर्वाहप्रसङ्गात्साक्षात्सम्बन्धेन ब्रह्मणि विकारं स्वीकृत्य पारिभाषिकेण केनचित्परम्परासम्बन्धेन तदसत्त्वमात्रेण निर्विकारत्वसमर्थनस्य विद्वदुपहास्यत्वाच्च ॥ १६ ॥ किं बहुना ॥ ॥१७॥ईदृशानिर्विकारत्वलक्षणकूटस्थत्वस्य सर्वविकारिद्रव्यसाधारण्येनाव्यावर्तकताप्रसङ्गोऽपि दुर्वारः ॥ सत्कार्यवादिनां वेदान्तिनां सर्वस्यैव तत्तदवस्थाश्रय द्रव्यस्य नित्यताया अवस्थानामेवागन्तुकतायाश्चाभिमततया विकारसामान्यस्याश्रयासमानसत्ताकत्वेन निरुक्तोभयसम्बन्धेन तदभावस्य सर्वविकारिद्रव्ये निर्बाधत्वात् ॥ १८ ॥ एवं विवर्तस्य विकारपरिणामादिशब्दवाच्यावस्थातो विलक्षणतां स्वीकृत्य परिणामं विनैव विवर्तमात्रस्वीकारेण ब्रह्मणः कारणत्वसिद्धि

कौटस्थ्यहान्यभावं च क्वचित्स्वयमेव ब्रुवाणस्य न हि परिणामं विनापि कारणत्वं सम्भवतीत्यपि क्वचिद्ब्रुवाणस्य तव केयं दशेति सुदूरपर्यालोचनेप्यन्तरेणोन्मत्तावस्थां न काञ्चित्स्वस्थावस्थां पश्यामः ॥ १९ ॥

अथ स्वसमानसत्ताकत्वस्वाश्रयत्वोभयसम्बन्धावच्छिन्नविकारत्वावच्छिन्नप्रतियोगिताकविकारसामान्याभावलक्षणं निर्विकारत्वमेव कूटस्थत्वम् । नचात्र कालिकसम्बन्धघटितसमनैयत्यं स्वसमानसत्ताकत्वम्। येनोक्तदोषस्स्यात् । अपि तु । पारमार्थिकसत्ता व्यावहारिकसत्ता प्रातिभासिकसत्ता चेति पदार्थानां सत्तात्रैविध्यस्यास्मदभिमततया स्ववृत्तिपारमार्थिकत्वव्यावहारिकत्वप्रातिभासिकत्वान्यतमधर्मवत्त्वरूपमेव तत्। इत्थं चेदृशकूटस्थत्वस्य न ब्रह्मणि बाधः। नापि चाव्यावर्तकता ब्रह्मणि पारमार्थिके तत्सजातीयविकारानभ्युपगमाद्व्यावहारिकप्रातिभासिकपदार्थयोस्तत्सजातीयविकाराभ्युपगमाच्च । इत्थं च व्यावहारिको वा प्रातिभासिको वा विकारो ब्रह्मण्यास्तां नाम। पारमार्थिकस्तु विकारो न हि कश्चिदस्ति । अतो न ब्रह्मणि कौटस्थ्यहानिः। जगत्कारणत्वं तु व्यावहारिकप्रातिभासिकविकारमात्रादेव । व्यावहारिकप्रातिभासिकविकारयोर्वस्तुतो मिथ्यात्वेन ब्रह्मणि तादृशविकारस्वीकारेपि न काचिदस्ति क्षतिरिति

चेत्तर्हि परमार्थतो ब्रह्मणो जगत्कारणत्वमपि नास्ती-त्येव सिद्धमिति ब्रह्मणो जगत्कारणत्ववादिनीनां श्रुतीनां शुक्तिकादिविषये भ्रान्तकृतरजतादिव्यवहार-वदयथावस्थितार्थप्रतिपादकत्वेनाप्रमाणतया एवाङ्गी-कारेण क्व तव ब्रह्मणो जगत्कारणत्वसमर्थनकथेति विप श्चितो विहसन्ति॥२०॥इत्थं चाध्यारोपवादे विवर्तवादे च वस्तुतो ब्रह्मण्यविद्यमानमेव जगत्कारणत्वं तस्मि-न्प्रतिपादयतो वेदस्याप्रमाणतायाः परमार्थतो ब्रह्मणो जगत्कारणत्वासिद्धेश्चाविशिष्टतया प्रथमपक्षाद्द्वितीय पक्षे विशेषाभिप्रायेणावतरणमपि तव भ्रान्तिमूलमेव ॥२१॥ अपि च पारमार्थिकसत्ता व्यावहारिकसत्ता प्र-तिभासिकसत्ता चेति यत्त्वं सत्तात्रैविध्यं ब्रूषे ॥ २२ ॥ तन्न क्वचिद्वेदेषूपलभामहे ॥ २३ ॥ नापि वेदविदग्रेस-रेण भगवता बादरायणेन निगूढनिखिलवेदरहस्यं निष्कासयता प्रणीते शारीरकशास्त्रे वा क्वचित्पश्यामः ॥ २४ ॥ तस्माद्वेदवैदिकगोष्ठीबाह्यस्स एष कृत्स्नस्त्व-दीयानां कोलाहलः पिशाचभाषाकोलाहल एवेत्युपे-क्षणीय एव वैदिकानाम् ॥ २५ ॥ वैदिकाः खलु व्या वहारिकशब्दितान्प्रातिभासिकशब्दितान्वा तावकी नपैशाचभाषासङ्केतमात्रासिद्धान्पदार्थान्नानुमन्यन्ते ॥ ॥ २६ ॥ अपि तु परिदृश्यमानं कृत्स्नमेव प्रपञ्चं पारमार्थिकमेव मन्यन्ते ॥ २७ ॥ शुक्त्यादौ रजता-

जगत्कारणत्वप्रतिपादकानां वेदानां प्रामाण्यमेव न जीवतीति पारमार्थिकं विकारं ब्रह्मण्यस्वीकुर्वतस्तव वेदग्राह्यकोटिनिवेशो दुर्वार एव ॥३१॥ तथाच ब्रह्मणो विकारित्वास्वीकारे कारणत्वासिद्धिः । कारणत्वास्वीकारे वेदाप्रामाण्यप्रसङ्गो दुर्वारः । तद्भयेन कारणत्व स्वीकारे विकारित्वस्यावर्जनीयतया कूटस्थत्वासिद्धिरिति ब्रह्मणः कूटस्थत्वं कारणत्वं च वदतस्तवैव परस्परविरोधो दुरुद्धरो भवति ॥ ३२ ॥ अतस्स्वदोषस्यैव परस्मिन्नारोपणं त्वया क्रियत इति सिद्धं भवतीति ॥४५॥ यदपि कौटस्थ्यभङ्गभिया ब्रह्मसमसत्ताकमन्यथात्वमनभ्युपगच्छतस्तद्विषमसत्ताकमन्यथाभावं चास्मन्मतप्रवेशभयादनभ्युपगच्छतस्तव मते तु ब्रह्मणः कारणत्वं गगनकुसुमवद्दुर्लभम् । तस्मादन्यथात्वप्रतिषेधात्कारणत्वप्रतिषेधस्सिद्ध इत्युक्तम्॥४६। तदप्यसत् । स्वरूपान्यथात्वधर्मान्यथात्वयोर्ब्रह्मण्यस्वीकारेऽपि सूक्ष्मचिदचिद्वैशिष्ट्यावस्थातस्स्थूलचिदचिद्वैशिष्ट्यलक्षणावस्थान्तरापत्तिरूपविकारोपपादनेनैव कारणत्वसिद्धेर्निष्प्रत्यूहत्वात् ॥ ४७ ॥ इदमत्रावधेयम् । ब्रह्मणः कौटस्थ्यभङ्गभिया विकारानभ्युपगमो नास्मास्वस्ति । कूटस्थशब्दस्य निर्विकारपरत्वाभावेन विकारस्वीकारेऽपि कौटस्थ्यभङ्गप्रसङ्गाभावात् । महाभाष्ये प्रथमाध्यायप्रथमपादे प्रथमाह्निके॥

सत्ताकत्वरूपस्य तद्विषमसत्ताकत्वस्य कालिकवि- शेषणतया तत्समनियतत्वाभावपर्यवसन्नस्य निर्बा- धत्वात्। अन्यादृशस्य विषमसत्ताकत्वस्य दुर्निर्वच त्वाच्च। तथाच॥ कौटस्थ्यस्य नानाकुलशाखामूलपु- रुषे कूटस्थशब्दप्रयोगानुरोधेन नानासमुदायसम्बन्धि तावच्छेदकसाधारणधर्मवत्त्वरूपतया निर्विकारत्वरूप त्वासम्भवेन न तद्भङ्गभिया ब्रह्मणि विकारानभ्युपग मोऽस्मास्वस्ति। अभ्युपगमाच्च स्थूलचिदचिद्विशि ष्टत्वादिलक्षणविकारस्य नापि वा ब्रह्मणो जगत्कारण तादौर्लभ्यप्रसङ्ग इति॥ ४८॥ यदप्युक्तम्। अन्यथा त्वस्य विकारत्वोक्त्या कारणत्वस्य श्रुतिविधेयत्वं निरस्तं भवति। नहि विकारःश्रुत्या विधेयो भवति। तस्यानर्थहेतुत्वात्। अनर्थविधाने शास्त्रस्याप्रामाण्या पातादिति॥४९॥तदपि विकारशब्दार्थाविज्ञानमूलप्रल पितमात्रम्।पूर्वाकाराद्विभिन्नाकारस्यैव विकारशब्दार्थ तया तस्यान्यथात्वरूपताया दुर्वारत्वात्। विकारवि- शेषस्य क्वचिदनर्थहेतुत्वसम्भवेपि पूर्वाकाराद्विभिन्ना- कारमात्ररूपे विकारसामान्ये तथात्वस्याप्रामाणिकत्वे न ब्रह्मणो विकारविधानमात्रेण श्रुतेरप्रमाणत्वप्रसङ्गस्य ब्रह्मणः कारणत्वनिरासप्रसङ्गस्य वाऽनवकाशाच्च ॥ ॥५०॥यत्तु।स्वरूपधर्मान्यथाभावशब्दितस्य परिणा- मस्य जन्मरूपत्वात्। तस्य। न जायते म्रियते वा॥

इत्यादिश्रुतिभिर्बाधस्याभ्युगतत्वाच्चापच्छेदन्यायेना-ध्यारोपापवादन्यायेन च ॥न जायते म्रियते वा। [क० ॥ १ ॥ २ ॥ १८ ॥ ] स वा एष महानज आत्मा। [ बृ० ॥ ६ ॥४।२५ ॥ ] निष्कलं निष्क्रियं शान्तम् । [ श्वे० ॥ ६ ॥ १९ ] न तस्य कार्यं करणं च विद्यते [श्वे०॥६॥८॥ ]इत्यादिभिः कारणत्वप्रतिषेधकवाक्यैः ॥आत्मन आकाशस्सम्भूतः[तै०॥२॥१॥२॥]इत्यादि कारणवाक्यानां बाधोऽभ्युपगतो भवति॥नहि परिणामं विनापि कारणत्वं सम्भवति॥येन तत्॥न जायत इत्यादिश्रुतिभिर्न बाध्येतेति वर्णितम् ॥ ५१ ॥ तदप्यस्मदीयभाष्यार्थमविजानतस्तव स्वमतासिद्धार्थस्यास्मासु स्वीयदुर्वासनामूलमारोपणमात्रमेव । अस्मदीयभाष्यकारैस्सूक्ष्मस्थूलचिदचिद्विशिष्टत्वलक्षणविकारवैशिष्ट्येनैव ब्रह्मणःकारणत्वोपपादनात् । स्वरूपधर्मान्यथात्वलक्षणविकारप्रतिषेधकताया एव न जायत इत्यादिश्रुतीनां प्रतिपादनात् । ब्रह्मण्यभ्युपगतविकारबाधकताया अप्रतिपादनाच्च कारणवाक्यानां कैश्चिद्बाधकथाप्रसङ्गस्यैवास्मदीयभाष्यकारासम्मतत्वात् । ईदृशासङ्गतकथाप्रसङ्गस्य युष्मदीयभाष्यकारस्यैव सम्मतत्वदर्शनाच्च ॥ ५२ ॥ प्रमाणभूतस्य शास्त्रस्य प्रमाणभूतेन शास्त्रेणैव बाधं न ह्यनुन्मत्तः कश्चिदङ्गीकुर्यात् ॥ ५३ ॥ न चास्मदीयभाष्यकार ईदृशीं

राय प्रवृत्तानांमातापितृसहस्रेभ्योऽपि वत्सलतराणाम पौरुषेयनित्यनिर्दोषसर्वसम्प्रतिपन्नप्रमाणभूतवेदानाम प्रमाणतायाः परस्परविरुद्धार्थप्रतिपादकतायाश्च निःशङ्कमङ्गीकारात् ॥ ६० ॥ वेदेष्वेव कैश्चिद्वाक्यैः केषांचिद्वाक्यानामात्यन्तिकबाधस्वीकारे बाधितवाक्यानाम्मिथ्यार्थबोधजनकत्वरूपाप्रमाणताया बाधकवाक्यानां तद्विरुद्धार्थबोधजनकतायाश्च स्वीकृतत्वं हि दुरपह्नवम् ॥ ६१ ॥ अपच्छेदन्यायोऽपि युगपदशक्यानुष्ठानपरस्परविरुद्धप्रायश्चित्तप्रतिपादकयोर्द्वयोश्शास्त्रयोर्भिन्नकालयागप्रयोगभेदाविषयत्वेनाविरोधव्यवस्थापनमात्रपर एव ॥ तत्रैकशास्त्रप्रवृत्तिकाले परशास्त्रस्याङ्गीकृतो बाधोऽपि तदानीमननुष्ठापकत्वमात्रलक्षण एव । न तु मिथ्यार्थबोधकत्वलक्षण इति नात्र द्वयोश्शास्त्रयोरेकतरस्याप्रमाणत्वकथागन्धः ॥ ॥६२॥ अयमपच्छेदन्यायः पूर्वतन्त्रे षष्ठाध्याये पञ्चम पादे ॥ पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् [ ६॥५॥५४]॥ इति सूत्रसिद्धः ॥ ६३ ॥ अत्र हि ॥ पञ्चर्त्विजस्समन्वारब्धाः प्रसर्पन्ति । अध्वर्युं प्रस्तोतान्वारभते॥प्रस्तोतारंप्रतिहर्त्ता॥प्रतिहर्त्तारमुद्गाता॥उद्गातारं ब्रह्मा॥ब्रह्माणं यजमानः [श्रु०॥ १॥१॥१॥] इति शास्त्रविहितान्वारम्भणस्य विच्छेदे प्रायश्चित्ताविधानपरम् ॥ बहिष्पवमानं प्रसर्पता यद्युद्गातापच्छिद्येत अदक्षिणस्सयज्ञस्सं

स्थाप्यः । तेन पुनर्यजेत तत्र तद्दद्याद्यत्पूर्वस्मिन्दास्य न्स्यात् । अथ प्रतिहर्ताऽपच्छिद्येत सर्ववेदसं दद्यात् [ श्रु०॥ १ ॥ ॥ १ ॥ ] इति शास्त्रं विषयः ॥ ६४ ॥ अत्रोद्गात्रपच्छेदप्रतिहर्त्रपच्छेदयोः प्रायश्चित्तनिमित्तयोरेकस्य पूर्वमपरस्य पश्चाच्च सम्भवेऽदक्षिणाकत्वसर्वस्वदक्षिणाकत्वलक्षणयोर्द्वयोः प्रायश्चित्तयोः परस्पर विरोधेन युगपदशक्यानुष्ठानयोरेकस्यैवानुष्ठाने प्राप्ते कस्यानुष्ठानं कार्यं कस्य न कार्यमिति विशये पूर्वं प्रवृत्तनिमित्तप्रायश्चित्तशास्त्रात्पश्चात्प्रवृत्तनिमित्तप्रायश्चित्तशास्त्रस्यैव प्राबल्यं स्वीकृत्य तत्सिद्धस्यैव प्रायश्चित्तस्यानुष्ठेयता व्यवस्थापिता ॥ ६५ ॥ तत्रैकतर शास्त्रस्य भिन्नकालयागप्रयोगान्तरविषयत्वमाश्रित्य तत्काले प्रवृत्त्यस्वीकारमात्रेण न बाधितार्थकत्वलक्षणा प्रामाण्यप्रसङ्गः ॥ ६६ ॥ अतो नासौ न्याय इह त्वदभिमतदानदक्षः ॥ ६७ ॥ यं पुनरध्यारोपापवादनामानं कञ्चिन्न्यायमभिदधासि ॥ ६८ ॥ न चासौ न्यायः । अपि त्वन्याय एव कश्चिन्न्यायशब्देनाभिधीयते विवेकहीनैस्त्वदीयैरिति गृहाण ॥ ६९ ॥ तथाहि ॥ यद्ग्राम्याणां पशूनां पयसा जुहुयाद्ग्राम्यान्पशूञ्छुचार्पयेद्यदारण्यानामारण्यान् जर्तिलयवाग्वा वा जुहुयाद्गवीधुक यवाग्वा वा न ग्राम्यान्पशून्हिनस्ति नारण्यान् । अथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेत्यजक्षीरेण

जुहोत्याग्नेयी वा एषा यदजाहुत्यैव जुहोति न ग्राम्यान्प शून्हिनस्ति नारण्यान् ॥ कृ० य० सं० ॥ ५ ॥४॥३॥ इति तैत्तिरीयकश्रुतौ च जर्तिलगवीधुकयवागूहोमयोरजक्षीरहोमस्य च विकल्प एव विवक्षितः । व्याकरणादौ शब्दशास्त्रकर्तृमहर्षिमतभेदप्रदर्शनवादिहापि यागानुष्ठातृमहर्षिमतभेदप्रदर्शनस्य विकल्पपरत्वात्। जर्तिलगवीधुकशब्दितानामारण्यतिलगोधूमानामनाहुतित्वेननिन्दायाः नहिनिन्दान्यायेनाजक्षीरप्रशंसामात्रपरत्वात् । श्रुतेर्जर्तिलगवीधुकानामत्यन्तमनाहुतित्वस्यैवाभिमतत्वे तेषां प्रमाणान्तरासिद्धाया होम्यतायाः प्रथमं विधेः पश्चात्प्रतिषेधस्य च प्रक्षालनाद्धीतिन्यायेनायुक्तत्वाच्च ॥ ७० ॥ नखलून्मत्तवच्छास्त्रं प्रमाणान्तराप्राप्तं कञ्चिदर्थं मुधैव प्रथमं विधाय पश्चात्प्रतिषेद्धुमर्हति ॥ ७१ ॥ अतो नात्र वस्तुतो विद्यमानस्यैव धर्मस्य क्वचिदध्यारोपपूर्वकं तदपवादो विवक्षितः ॥ ७२ ॥ यत्तुमीमांसकैः पूर्वतन्त्रे ॥ दशमाध्यायेऽष्टमपादे ॥ न चेदन्यं प्रकल्पयेत्प्रकृतावर्थवादस्स्यादानर्थक्यात्परसामर्थ्याच्च ॥ ॥ १० ॥ ८ ॥ ७ ॥ इतिसूत्रव्याख्याने दर्शितश्रुतेर्जर्तिलगवीधुकयोरजक्षीरस्य च होम्यत्वविकल्पपरत्वमस्वीकृत्यजर्तिलगवीधुकहोम्यत्वविधिनिषेधयोरर्थवादतामाश्रित्याजक्षीरमात्रहोम्यत्वविधिपरत्वमेव

नापि वा विध्यन्तरं किञ्चिदित उत्तरं श्रूयते ॥ ३ ॥ अतो नात्र प्रागुदाहृतपूर्वतन्त्रसूत्रसिद्धन्यायविशेषस्य प्रचारणावकाशः ॥४॥ न चेमं न्यायविशेषमध्याशेपापवादन्याय इति मीमांसका व्यवहरन्ति ॥ ५ ॥ न च तत्रासतो धर्मस्य क्वचिदध्यारोपोऽपवादो वाऽस्ति ॥ ६ ॥ न चार्थवादवाक्यानामप्रमाजनकताया इष्टतयाऽत्र निषेधपर्यन्तभागस्यार्थवादताभिधानेनैव-जर्तिलगवीधुकानामाहुतित्वविधिनिषेधयोरध्यारोपापवादरूपत्वं तन्निबन्धनं वेदेपि भागविशेषस्याप्रामाण्यं च स्वीकृतं भवत्येवेति वाच्यम् । अर्थवादवाक्यानामप्रमाणत्वे सर्वत्रैवार्थवादस्थले त्वदभिमताध्यारोपापवादन्यायस्य सुवचतया जर्तिलगवीधुकश्रुतिपर्यन्तानुधावनस्य तव व्यर्थत्वात् । अर्थवादवाक्यानां क्वचिदापातसिद्धार्थप्रतीतेरयथार्थत्वेऽपि तात्पर्यविषयपर्यवसन्नबोधस्य तत्तद्विधिवाक्यवेद्यविधेयार्थविशेष्यकप्रशस्तत्वप्रकारकज्ञानरूपस्य प्रमात्वादापातसिद्धार्थप्रतीतौ तात्पर्याभावात्स्वतात्पर्यविषयाप्रमात्मकबोधजनकताया एव वाक्यानामप्रमाणत्वरूपत्वात्तत्तद्वाक्य तात्पर्य मजानतो मन्दमतीन्प्रत्यप्रमात्मकबोधजनकत्वमात्रेणाप्रमाणत्वे प्रमाणतया सम्प्रतिपन्नानां सर्वेषामेव वैदिकलौकिकवाक्यानामप्रमाणताप्रसङ्गस्य दुर्वारत्वाद्यथोक्तलक्षणाया एवाप्रमाणताया वक्तव्यतय

तस्याश्च वेदवाक्येषु कस्याप्यनभिमतत्वाच्च ॥७॥अत एव पूर्वतन्त्रे प्रथमाध्यायद्वितीयपादेऽर्थवादाधिकरणे॥ विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः ॥१॥ २॥७॥इत्यादिभिस्सूत्रैरर्थवादानामपि विधिनैकवाक्यतया मुख्ययाऽमुख्यया वा वृत्त्या यथायथं तत्तदर्थप्रतिपादनमुखेन विधेयार्थविशेष्यकप्राशस्त्यप्रकारकप्रमात्मकवाक्यतात्पर्यविषयपर्यवसन्नबोधजनकतया प्रामाण्यमेव समर्थितम् ८॥यथा च विषं वा भक्षयेत्॥न राजकुलटादिप्रतिग्रहं कुर्यात्॥इति वाक्यस्य विषभक्षणे तात्पर्याभावेपि राजकुलटादिप्रतिग्रहावृत्तिबलवदनिष्टविशेषाजनकत्वलक्षणतदवधिकोत्कर्षवत्त्वरूपं तस्मादुचितत्वं विषभक्षणे प्रतिपादयतो न बाधितार्थकत्वलक्षणमप्रामाण्यमस्ति॥९॥तथैव।जर्तिलयवाग्वा वाजुहुयाद्गवीधुकयवाग्वावानग्राम्यान्पशून्हिनस्ति नारण्यान् ॥ इति वाक्यस्यापि जर्तिलगवीधुकयवागूहोमविधाने तात्पर्याभावेपि ग्राम्यारण्यपशुहिंसासाध्याहुतिविशेषहोमावृत्त्यानिष्टविशेषाजनकत्वरूपतदवधिकोत्कर्षवत्त्वलक्षणं तस्मादुचितत्वं जर्तिलगवीधुकयवागूहोमेप्रतिपादयतो न तत्प्रसङ्गः।लिङः कर्त्तुमुचितत्वरूपकर्तव्यत्वार्थकत्वविवक्षणेन चोक्तवाक्यस्योक्तार्थकत्वस्यापि लाभात् १०तर्हि तद्धोम एव क्रियतामित्याशङ्कापरिहाराय प्रवृत्तम् ॥ अथो खल्वाहुरित्यादिवाक्यम्॥११॥देवता

प्रीतिजनकहोमकर्मत्वलक्षणाहुतित्वाभावरूपमेव चा-
नाहुतित्वमेतद्वाक्येन बोध्यमिष्यते ॥ १२ ॥ अतो ना-
त्राहुतित्वाध्यारोपापवादौ स्तः ॥ १३ ॥ वस्तुतस्तु जर्तिं
लगवीधुकानामाहुतित्वप्रतिषेधमात्रस्यैवोत्तरविधिशेष
तात्र युक्ता । न तु तेषां होम्यत्वविधेरपि । तेषां
प्रमाणान्तराप्राप्तां होम्यतां प्रथमं मुधैव विधाय
पश्चात्तत्प्रतिषेधस्य प्रक्षालनाद्धीति न्यायेनायुक्तत्वात्।
प्रागुदाहृतपूर्वतन्त्रसूत्रस्याप्येतावन्मात्रपरताया एव
स्वारसिकत्वाच्च ॥ १४ ॥ तथाहि । शिष्टा तु प्रतिषेध-
स्स्यात् ॥ १० ॥ ८ ॥ ६ ॥ इति पूर्वसूत्रे विधिपूर्वक-
प्रतिषेधस्य । अतिरात्रे गृह्णाति षोडशिनं नातिरात्रे
गृह्णातिषोडशिनमित्यादेर्विकल्परूपतास्थापनात्तद्वदे
वजर्तिंलगवीधुकश्रुतावपि तेषां होम्यत्वविधिपूर्वकस्य-
तत्प्रतिषेधस्य विकल्परूपताप्रसङ्गे तत्परिहारेण
तस्यैवोत्तरविधिशेषार्थवादरूपतां स्थापयितुमुत्तरसूत्रं
प्रवृत्तम् ॥ पूर्वसूत्रात्प्रतिषेध इत्यस्यानुवृत्त्या प्रतिषे
धविशेष्यकार्थवादत्वप्रकारकबोधस्यैव तेन जननात्
॥१५॥ पूर्वसूत्रात्प्रतिषेध इत्यस्य । पादादिसूत्रात् ।
विकल्प इत्यस्य चानुवृत्तियुतस्य ॥ न चेदन्यं
प्रकल्पयेत्प्रक्लृप्तावर्थवादस्स्यादानर्थक्यात्परसामर्थ्या
च्च ॥ १०॥८॥ ७ ॥ इत्युत्तरसूत्रस्य चायमर्थः । प्रतिषे
धः।जर्तिंलगवीधुकानामाहुतित्वप्रतिषेधोपि । विकल्प-

स्स्यादेव । कदा इत उत्तरं श्रुतिः । अन्यम् । अजक्षीर विषयंविध्यन्तरम् । न प्रकल्पयेच्चेत् । न बोधयेच्चेत् । तदा ॥ प्रक्लृप्तौ । विध्यन्तरबोधने सति तु । अर्थवाद स्स्यात् । तच्छेषभूतार्थवाद एव स्यात् । आनर्थक्यात् । परिश्रमविशेषसाध्यविध्यन्तरस्योत्तरत्रोपदेष्टव्यत्वे निवृत्तिसाध्यप्रतिषेधोपदेशस्य फलविशेषनिरपेक्षप्रयासविशेषोपरातिकामालसाधिकार्युद्देशेन प्रयत्नसाध्यसर्वविध्यनन्तरं चरमंकर्तव्यस्यमध्येकरणे तत्प्रयोजनासिद्ध्या निरर्थकत्वात्।यद्वाऽङ्ग्यनिष्पत्त्यपर्यवसन्नप्रतिषेधस्य विकल्परूपतास्वीकारे कथंचिद्यथायोग्यफलसम्भवेऽपि तदनिष्पत्तिपर्यवसायिनोऽस्य प्रतिषेधस्य तथात्वस्वीकारे फललेशासम्भवात् । परसामर्थ्याच्च।परेण विधिनैकवाक्यतया तदर्थवादत्वेन सम्यगन्वितार्थकत्वसम्भवात्सम्भवत्येकवाक्यत्वे वाक्यभेदकल्पनाया अन्याय्यत्वाच्चेति॥१६॥अयं भावः। अतिरात्रे गृह्णाति षोडशिनम् । नातिरात्रे गृह्णाति षोडशिनम् । इत्यत्र प्रतिषेधसामर्थ्येन षोडशिग्रहणाभावेपि तत्रत्यातिरात्रलक्षणाङ्गिनिष्पत्त्यधीनफलसिद्धिस्वीकारे षोडशिग्रहणविधानवैयर्थ्यापत्त्या तद्विधानसामर्थ्यादेव तस्य फलवत्त्वं दुर्वारम् ॥ सत्यपि तस्य फलवत्त्वे प्रतिषेधारम्भसामर्थ्यात्तत्रत्यातिरात्रलक्षणाङ्गिनिष्पत्त्यधीनफलसिद्धिरवश्यमङ्गीकार्या प्रतिषेध-

स्यानन्यथासिद्धत्वात् । अतस्तत्र विधिप्रतिषेधयोर्द्वयो रप्यनन्यथासिद्धत्वेन फलवत्त्वावश्यकतयाऽङ्गिनिष्प-त्त्यधीनफले पौष्कल्यतदभावलक्षणवैषम्यमात्रमाश्रि त्याङ्गिनिष्पत्त्यधीनफलजनकतायांपरं तुल्यतास्वीका रेण विकल्पता स्वीकृता ॥ इह तु प्रतिषेधस्योत्तरवि-ध्यन्तरशेषप्रशंसार्थार्थवादरूपतयाऽन्यथासिद्धत्वेन न विकल्परूपता संभवति ॥ एवं प्रयासविशेषोपरतिका-ममलसाधिकारिणमुद्दिश्य प्रवृत्ततया वर्णनीयः प्रति-षेधो न विध्यन्तरात्पूर्वं संभवदुक्तिकः । पश्चादपि प्रय-त्नसाध्यविध्यन्तरश्रवणेन प्रयासविशेषोपरतिलक्षण-प्रतिषेधफलस्यैवासिद्धेः ॥ अपि च । अग्निहोत्राहुति-रूपप्रधानक्रियानिषेधलक्षणो ह्ययं प्रतिषेधो न कथं चिदपि फलवान्भवितुमर्हति । षोडशिग्रहणाग्रहणस्थल इवात्राङ्गिनिष्पत्तेरेवाभावात्।अतश्चात्रत्यप्रतिषेधस्य न विधिना सह विकल्परूपता सम्भवदुक्तिका॥तत्समान फलजनकताया एव तेन सह विकल्पतारूपत्वात्।इहा ङ्गिनिष्पत्तेरेवासम्भवस्य दर्शिततया तदधीनफललेशा सम्भवाच्च । तस्मात्सर्वथैवासम्भवद्विकल्पभावोऽत्रत्यो विध्यन्तरशिरस्कः प्रतिषेध उत्तरविधिशेषार्थवादरूप एव । जर्तिलगवीधुकविधिस्तु नार्थवादः । तद्विधाने श्रुतेस्तात्पर्याभावे ग्राम्यारण्यपश्वन्तरपयःप्रतिषेध-पूर्वकमजक्षीरमात्रस्यविधानसम्भवेन मध्ये मुधैव

जर्तिलगवीधुकविधिप्रतिषेधयोररण्यरोदनायमानयोर नावश्यकत्वात्। अतस्तद्विधाने श्रुतेस्तात्पर्यस्याव-श्यकतया तद्विधिना सहाजक्षीरविधेर्विकल्परूपतैवाभि मता। अत एवोदाहृतसूत्रेण पूर्वसूत्रादनुवृत्तप्रतिषेध पदबोध्यविशेष्यकार्थवादत्वप्रकारको बोध एव जायते न विधिविशेष्यकोऽपि। जर्तिलगवीधुकानामनाहुति त्ववादः प्रशस्ततमाहुतित्वप्रतिषेधमात्ररूप उत्तराज क्षीरविधिप्रशंसार्थ इति॥१७॥यत्तु अदनीयं यद्द्रव्यंतदे वाहुतियोग्यम्। यदन्नः पुरुषो भवति तदन्नास्तस्यदेव ता इति न्यायात्।जर्तिला गवीधुकाश्च मनुष्यैर्नाद्यन्ते। तस्मान्नाहुतियोग्याः।अतो जर्तिलगवीधुकविधेरपि न्या य्यमर्थवादत्वमिति सायनो मन्यते १८तदसत्॥यदन्नइ ति न्यायस्य तत्तत्पुरुषान्नस्य तत्तद्देवतान्नत्वावश्यक त्वप्रतिपादनमुखेनायोगव्यवच्छेदमात्रपरत्वेनातिरि-क्तव्यवच्छेदपरत्वाभावात्। अन्यथासाम्निद्दर्भादीनामपि सम्प्रतिपन्नाहुतिभावानामनाहुतित्वप्रसंगात्। सूत्र स्वरसविरोधाच्च॥ १९ ॥ किं बहुना। अदनीयाना-मपि वस्तूनामाग्नौ हूयमानानां प्रत्यक्षमिहैव विलय दर्शनेन साक्षात्ताद्रूप्येण तत्तद्देवताभोगार्हत्वाभावा द्धुतानां तेषां सारस्यैव तत्तद्भोग्याकारेण परिणाम मापन्नस्य तत्तद्देवताभोगयोग्यत्वस्वीकारावश्यकत-या तथात्वं च शास्त्रबलेनादनीयानामनदनीयानांचोभ

येषां तुल्यमेव स्वीकर्तुं योग्यमिति न कश्चिद्विशेषः ॥२०॥ नच ग्राम्यारण्यपश्वन्तरपयोभ्योजक्षीरस्य को विशेषः । अजाया अपि ग्राम्यपशुतायास्तत्क्षीरग्रहणस्यापि वत्सपोषणहानिप्रयुक्तशोकहेतुत्वलक्षण हिंसारूपतायाश्चपश्वन्तरवदेवसत्त्वादितिवाच्यम् ॥ ग्राम्यारण्यपश्वन्तराणामनाग्निदेवताकत्वेनतदीयक्षीराहुतौदोषफलयोस्तुल्यबलतयाफलस्य प्राप्तदोषपरिहारमात्रपरिक्षीणतयाफलावशेषो न सम्भवति।जर्तिलगवीधुकाहुतौ दोषाभावेपि प्रशस्ततमाहुतित्वाभावेनात्यल्पमेव फलं भवति। अजायास्त्वग्निदेवताकत्वेन तदीयक्षीरस्य प्रशस्ततमाग्निहोत्राहुतित्वसंभवेन दोषपरिहारपूर्वकातिशयिताभ्युदयस्संभवतीत्यत्रश्रुतेस्तात्पर्यात् ॥२१॥ अत एव हि तत्रैव प्रकरणे श्रूयते । आग्नेयीवा एषा यदजेति ॥२२॥ तथा च जर्तिलगवीधुकश्रुतौ प्रतिषेधान्तभागस्यार्थवादतापक्षे वा प्रतिषेधमात्रस्य तथात्वपक्षे वाऽध्यारोपापवादप्रसङ्गलेशाभावेनाध्यारोपापवादनाम्नस्स्वकपोलकल्पितन्यायस्योपष्टम्भकतया तच्छ्रुतेरुदाहरणं मीमांसानभिज्ञकृत्यमेवेतिसिद्धं भवतीति ॥ ७८ ॥ यदि पुनरध्यारोपापवादन्यायो नाम कश्चिन्न्यायः प्रामाणिकस्स्यात्। तदा सएव न्यायोऽतिरात्रे गृह्णाति षोडशिनम् । नाति

रात्रे गृह्णाति षोडशिनमित्यत्रापि मीमांसकैः किमिति न प्रवर्त्यैत। तथाविधन्यायस्य कस्यचिदप्रामाणिकत्वादेव॥ शिष्ट्वा तु प्रतिषेधः स्यात् [॥१०॥८॥६॥] इत्यधिकरणे षोडशिग्रहणतत्प्रतिषेधयोर्विकल्परूपता तैस्संस्थापितेत्यवगम्यते ॥ ७६ ॥ तस्माद्यथावदनधिगतमीमांसाशास्त्रैस्त्वदीयैरन्याय एव कश्चिदध्यारोपापवादन्यायनामा कल्पित इति सिद्धम् ॥७७॥ अपिच न्यायसञ्चारो हि विद्वद्भिरसम्प्राप्तविरोधशङ्कापरिहारायैव क्रियमाणो दृष्टः। नतु सम्प्राप्तशङ्काविषयविरोधदृढीकरणाय। एवं सत्यपच्छेदन्यायाध्यारोपापवादन्यायप्रदर्शनेन वेदवाक्यानां परस्परविरोधं वज्रलेपवद्दृढीकुर्वन्कथं त्वमात्मानं पण्डितम्मन्यसे। कथं वा पुनरित्थं वेदानां परस्परविरुद्धार्थकतां स्वयं व्यवस्थापयन्नेव सर्वत्राविरोधसमर्थनैकपरास्मदीयभाष्योपरि परस्परविरुद्धार्थकत्वेनासामञ्जस्यं ब्रुवाणो न लज्जस इति विस्मयामहे ॥ ७८ ॥ यदपि। ब्रह्मणः परिणामाभावेपि कार्यानुकूलज्ञानचिकीर्षाकृतिलक्षणं कारणत्वं स्यादित्याशङ्क्य तथा सति ज्ञानचिकीर्षाकृत्यात्मनाब्रह्मणः परिणामोऽभ्युपगन्तव्यः। अन्यथा कृत्याद्यसिद्धेरिति दूषणम् ॥ ७९ ॥ तदपि तुच्छम्। यस्सर्वज्ञस्सर्ववित् ॥ [ मुं० २ ॥ २ ॥ ७ ॥ ] परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च।

[ श्वे० ॥ ६ ॥ ८ ॥ ] इत्यादिश्रुतिभिर्ब्रह्मणि धर्मिणि ज्ञानादीनां धर्मतया सर्वदा विद्यमानताया एवावगमेन ब्रह्मणस्तद्रूपेण परिणामकथाया वेदान्तव्युत्पत्तिगन्ध रहितजल्पितत्वावगतेः ॥ ८० ॥ एतेन ज्ञानचिकीर्षा-कृत्यादीनामनात्मधर्मत्वकथापि दूरोत्सारिता । उदाहृतश्रुतिभिरात्मधर्मताया एव तेषां स्पष्टमवगतेः । ज्ञोऽत एव [ शा० ॥ २ ॥ ३ ॥ १९ ॥ ] कर्ता शास्त्रार्थ वत्त्वात् [ शा० ॥ २ ॥ ३ ॥ ३३ ॥] इत्यादिसूत्रैस्सूत्रकारेणापि तेषामात्मधर्मताया एव व्यवस्थापनाच्च ॥ ॥ ८१ ॥ यदपि । कृत्यादीनां नित्यत्वमाशङ्क्य । चिकीर्षादयो जन्याः । इष्टसाधनताज्ञानमूलत्वात् । देवदत्तचिकीर्षादिवत् । अन्यथाकार्यसातत्यप्रसङ्ग इति दूषणम् ॥ ८२ ॥ तदप्यसत् । वेदान्तेष्वसत्कार्य वादनिराकरणपूर्वकसत्कार्यवादस्य सर्वतः प्रसिद्धतया स्वरूपतो नित्यस्यैव वस्तुनोऽवस्थाविशेषवत्त्वेन कार्यत्वाङ्गीकारेण ज्ञानादीनामपि स्वरूपतो नित्याना मेव सतां तत्तदवस्थाविशेषवत्त्वेन कार्यतासम्भवे बाधकानुपलम्भेन कार्यत्वसाधनेन नित्यत्वनिराकरणायोगात् । अन्यथा । तदनन्यत्वमारम्भणशब्दादिभ्यः [ शा० ॥ २ ॥ १ ॥ १५ ॥ ] इत्यादिभिस्स्थाप्य मानायाः कारणाद्ब्रह्मणः कार्यस्यानन्यताया अपि नित्ये ब्रह्मणि कार्यत्वासम्भवे व्याहतत्वप्रसङ्गात् ।

तत्तत्कालभाविकार्यविशेषौपयिकतत्तदवस्थाविशेष-
वत्त्वस्य तत्तत्कालविशेषमात्रभावितया कार्यसातत्य
प्रसङ्गस्याप्यनवकाशात् । जीवगतज्ञानस्यापि नित्यस्यै
व सतस्तत्तत्कार्यप्रयोजकेच्छात्वाद्यवस्थानां तत्तत्का-
लभावित्वमात्रस्यैव प्रामाणिकत्वेन दृष्टान्तस्याप्यसि-
द्धेश्च ॥८३॥ अत एव ॥ तदैक्षत बहु स्यां प्रजायेयेती
त्यादिश्रुतिषु ब्रह्मणस्तत्तत्कालभाविसङ्कल्पविशेषपू-
र्विकैव सृष्टिः श्रूयते ॥ ८४ ॥ यदपि । किंच । कार्या
नुकूलकृत्यादिमत्त्वान्निमित्तत्वमात्रं ब्रह्मणस्स्यात् । न
तू पादानत्वमित्युक्तम् ॥८५॥ तदपि न सत् । तदैक्षत
बहु स्यां प्रजायेयेतीत्यादिश्रुतिषु बहुभवनसङ्कल्पपूर्व
कमेव सृष्टेः प्राङ्नामरूपाद्यभावेनैकत्वापन्नस्य सच्छ-
ब्दवाच्यस्य ब्रह्मणः पश्चाद्बहुभवनस्य श्रूयमाणतयासू
क्ष्मचिदचिच्छरीरकत्वविशिष्टब्रह्मण एकत्वावस्थापन्न-
स्य बहुभवनसङ्कल्पविशिष्टस्यैव स्थूलचिदचिच्छरीर
कत्वविशिष्टं बहुत्वावस्थापन्नं स्वात्मानं प्रत्युपादानका
रणतायाः प्रतिपन्नत्वेन कृत्यादीनामुपादानकारणतां
प्रत्यप्युपकारकतावगमेन तदनुपकारकत्वाभिधाना-
सङ्गतेः ॥ ८६ ॥ अथ यदुक्तम् । स्वरूपधर्मान्यथात्व
लक्षणविकारस्यैव श्रुतिप्रतिषेध्यत्वात्तादृशविकारा
श्रयचिदचिद्विशिष्टत्वमात्रेणाभ्युपगम्यमानस्य ब्रह्मका-
रणत्वस्य श्रुतिभिरप्रतिषिद्धत्वान्न विरोध इत्याशङ्क्य

ततः । विकारिवैशिष्ट्याद्यत्कारणत्वम् । तत्किं विकार त्वेनाभिमतम् । उत नेति विकल्प्य । आद्येविकारिवैशि ष्ट्यकृतविकारस्यापि पातकिसंसर्गकृतपातकस्येवा- नर्थत्वाच्छ्रुतिप्रतिषेध्यत्वं दुर्वारम् । जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते [ छां० ६ ॥ ११॥३॥] ध्यायतीव लेलायतीव ॥ [बृ० ६ ॥ ३ ॥ ७ ॥] अन- श्नन्नन्यो अभिचाकशीति [मुं० ॥ ३ ॥ १ ॥ १ ॥] इत्याद्याः परश्शताश्श्रुतयो विकारिवैशिष्ट्यकृतं वि- कारं प्रतिषेधन्ति । द्वितीयस्तु त्वदुक्तिविरुद्ध इति ॥८७॥ तदपि श्रीभाष्यपङ्क्त्यर्थानवधारणमूलमेव श्री भाष्ये ब्रह्मणि विकारिवैशिष्ट्यस्यविकाररूपताभिधाने पिकारणत्वस्य विकाररूपतायाःविकारिवैशिष्ट्यकृत विकारान्तरस्य वा क्वाप्यभिधानादर्शनात् । अनन्य- थासिद्धनियतपूर्ववृत्तित्वलक्षणस्य कार्यानुकूलशक्ति मत्त्वलक्षणस्य वा कारणत्वस्यावस्थातोऽवस्थान्तराप त्तिलक्षणविकाररूपत्वासम्भवात् । अन्यथा निर्विका- राणां निमित्तकारणसहकारिकारणानां कारणत्वव्यव- हारानिर्वाहाच्च ॥ ८८ ॥ जीवापेतमित्यादिवाक्यम् । अचिद्वस्तुन्येव शोकहर्षहेतुमरणादिशब्दाभिलपनीय स्वरूपान्यथात्वलक्षणविकारो जायते । न जीवात्मनी त्येतत्परम्॥८९॥स समानस्सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीवेति वाक्यस्यायमर्थः । सः। जीवः ।

समानस्सन् । वस्तुतो हर्षशोकहेतूपचयापचयरहितस्व रूपस्सन्नेव । उभौ लोकौ । उत्तमाधमलोकौ । अनुसञ्चरति- कर्माधीनज्ञानसङ्कोचविकासस्सञ्चरति । कथम्भूत इव । ध्यायतीव । चिन्ताहेतुधर्मवानिव । शोकहेतु देहादिभो गोपकरणगतशोभाहान्यादिलक्षणापचयवानिवेति या- वत् । ध्यै चिन्तायामिति हि धातुः । चिन्ता च शोक- त्वावस्थापन्नं ज्ञानमेव । लेलायतीव । दीप्यमान इव । हर्ष हेतुदेहादिभोगोपकरणगतशोभादि लक्षणोपचयवा निवेति यावत् । लेला दीप्ताविति कण्ड्वादिगणघटकोऽयं धातुः । इवशब्द उभयत्र तत्तद्धर्मविशिष्टपरः । अविवे- केन तत्तद्धर्मवत्तया स्वात्मानं मन्यमानो हर्षशोकरूप ज्ञानविकारवान्सन्परिभ्रमतीति यावत् । ध्यायतिशब्दो त्र । स एष जीवेनात्मनाऽनुप्रभूतः पेपीयमानो मोदमान- स्तिष्ठति ॥ [ छां० ॥ ६॥ ११ ॥ १ ॥ ] इत्यत्र पेपीय मानमोदमानशब्दवदचेतनदेहादिदशापरो विवक्षित इति ॥ ९० ॥ तथाचैतद्वाक्यं स्वरूपान्यथात्वलक्षण विकारोऽचिद्वस्तुगत एव न जीवगतः । किन्तु तादृश विकारे स्वगतत्वानुसन्धानहेतुधर्म्मभूतज्ञानान्यथात्व लक्षणविकार एव जीवगत इत्येतत्परम् ॥ ९१ ॥ अन- श्नन्नन्यो अभिचाकशीतीत्यस्यायमर्थः । अन्यः । पर- मात्मा । अनश्नन् । प्राकृतविषयानभुञ्जान एव सन् । प्राकृतविषयभोग्यत्वानुसन्धानहेतुकज्ञानविकारलक्षण

धर्मान्यथात्वरहित एव सन्निति यावत्। अभिचाकशी-
ति । अत्यन्तं देदीप्यत इति ॥ ९२ ॥ अनेन च
परमात्मनो धर्मान्यथात्वलक्षणविकाररांहित्यंप्रतिपा-
द्यते ॥ ९३ ॥ इत्थं चोदाहृतश्रुतिवाक्यैः अचे-
तनानां स्वरूपान्यथात्वलक्षणविकारोऽस्ति। आत्मनां
तादृशो विकारो नास्ति । अस्ति तु धर्मभूतज्ञा-
नान्यथात्वलक्षणो विकारो जीवानाम् । तादृशोपि-
विकारः परमात्मनो नास्तीत्येतावदेव प्रतिपादना-
न्नात्र कश्चिदस्त्यस्माकं विरोधः ॥ ९४ ॥ विका-
रिवैशिष्ट्यलक्षणो विकारः । तत्प्रयुक्तं कारणत्वं चेत्ये-
तावदेव ब्रह्मणोऽभ्युपगतमस्मद्भाष्ये ॥ नच तत्प्रतिषेध
उदाहृतश्रुतिषु दृश्यते । नापि च कारणत्वमेव विकार
रूपमिति क्वचिदभिहितम् । इत्येवं तत्त्वे स्थिते । श्री
भाष्यस्योदाहृतश्रुतिविरोधस्वोक्तिविरोधयोर्वर्णनं त-
दीयपङ्क्त्यर्थानवधारणमूलमेवेति स्पष्टंविदुषाम्॥९५॥
इत्थं सूक्ष्मस्थूलचिदचिद्वैशिष्ट्यलक्षणस्य पारमार्थि-
कस्यैव विकारित्वस्य ब्रह्मणि स्वीकारेण विकारित्व
निर्वाह्यमुपादानकारणत्वं पारमार्थिकमेव सिध्यति
॥ ९६॥ एवम्भूतस्य श्रीभाष्यार्थस्य सर्वव्युत्पन्नधियां
व्यक्ततया तमर्थमविज्ञायैवचिदचिद्वस्तुवैशिष्ट्यात्का-
रण त्वमित्यस्याभिप्रेततयाऽनुपयोगिनो नानाविधा
न्विकल्पान्स्वकपोलकल्पनयैव कृत्वा समुद्रघोषायित-

स्तावकीनस्तदूषणोद्घोषः । पदवाक्यपदवीदवीयसीं वज्रमूर्खतामेव विविनक्ति तवेति विपश्चितो विहसन्ति। त्वदुक्तविकल्पविषयेष्वर्थेष्वेकस्याप्यस्मद्भाष्याभिमतत्वादर्शनात् ॥९७॥ तस्मात्तस्यैतस्यानुपयोगिनस्तावकीनसमुद्घोषस्य न किञ्चिदस्ति प्रतिवक्तव्यमुत्तरमित्युपेक्षामहे ॥ ९८ ॥ परन्तु विवेकिनां यत्पुनः किञ्चिदस्तीह जिज्ञासितव्यम् ॥ ९९ ॥ तत्स्वयमेव वयं विविच्य प्रत्याख्यास्यामः ॥ १०० ॥ यदविज्ञाने नान्धहृदये त्वय्यनधिगतप्रश्नवर्त्मनि केवलं प्रलपत्यपि श्रोतॄणाम् । नूनमस्ति किञ्चिदस्य घोषस्यकारणम् । अन्तरेण च किमपि कारणं नायं घोष उदीयादिति शङ्का सम्भवति । यथा महति गाढान्धकारेऽनधिगतवर्त्मनि केवलं भषत्यपि भषके ॥ १०१ ॥ इमे खल्वत्र प्रष्टव्यांशाः । सूक्ष्मस्थूलचिदचिद्विशिष्टं कथं विकारो भवितुमर्हति । स्वरूपान्यथात्वलक्षणविकारवत्स्वेव लोके विकारित्वव्यपदेशेन तस्यैव विकाररूपतायास्सुवचत्वात् ॥१॥ यदि पुनस्तदेव विकारस्स्यात्तर्हि ब्रह्मणो निर्विकारत्वं कथमुपपद्यते ॥ २ ॥ यदि च ब्रह्मणि निर्विकारत्वव्यपदेशो विकारविशेषाभावविषयतया सङ्कुचितो व्यवस्थाप्यते । तदा सामान्यविषयश्रुतेस्सङ्कुचितार्थकल्पनदोषोऽन्येषामुक्तो भवतामपि कथं न दुर्वारस्स्यात् ॥ ३ ॥ उक्तदोष-

परिहाराय तस्य विकाररूपत्वास्वीकारे च निर्विकारस्य ब्रह्मणः कथमुपादानकारणत्वं सुवचमिति॥१०२॥ अत्रोच्यते । सूक्ष्मत्वस्थूलत्वयोरवस्थयोर्विकाररूपतायास्सम्प्रातिपन्नत्वात् । साक्षात्सम्बन्धेन विशेषणीभूतवस्त्वन्तरानिष्ठयोस्तयोरेवपरम्परासम्बन्धेनब्रह्मनिष्ठयोस्तस्य कारणतानिर्वाहकत्वात् ।परम्परासम्बन्धेन तादृशावस्थावत्त्वस्यैव सूक्ष्मस्थूलचिदचिद्वैशिष्टयरूपत्वाच्च तस्य विकाररूपत्वं तद्वत्तया ब्रह्मणः कारणत्वं च निरपवादमेव ॥१॥ब्रह्मणो निर्विकारत्वव्यपदेशस्यापृथक्सिद्धिलक्षणसाक्षात्सम्बन्धावच्छिन्नविकारत्वावच्छिन्नप्रतियोगिताकसामान्याभावविषयतयानास्माकं श्रुतेस्सङ्कुचितार्थकत्वकल्पनदोषोपि॥ २॥ चिदचिद्व्यावर्तनाय प्रवृत्तो ब्रह्मणि निर्विकारत्वव्यपदेशो हि । यादृशसम्बन्धेनयादृशो विकारश्चिदचिद्गतस्तद्दोषाय कल्पते।तादृशसम्बन्धावच्छिन्नतादृशविकारत्वावच्छिन्नप्रतियोगिताकाभावविषय एव वाच्यः॥३॥अतस्तद्व्यपदेशस्य परम्परासम्बन्धावच्छिन्नप्रतियोगिताकसामान्याभावविषयतायाः कथञ्चिदप्यसम्भवेन ब्रह्मणि साक्षात्परम्परासम्बन्धविषययोर्निर्विकारत्वसाविकारत्वनिर्देशयोर्न विरोधगन्धः ॥४॥ यो धर्मोयत्र येनसम्बन्धेन सम्बद्धो दोषाय कल्पते। स धर्मस्तस्मादन्यत्र तदन्येन येनकेनचित्सम्बन्धेन सम्बद्धोपि न दोषाय कल्पत

इति ब्रह्मणः परम्परासम्बन्धेन विकारवत्त्वाभ्युपगमेपि न दोषकथाप्रसङ्गः ॥ ८ ॥ अन्यथा हि चैत्रगतस्य ब्रह्महत्यादि दोषस्य स्वाश्रयसंयुक्तगगनसंयोगादिलक्षणपरम्परासम्बन्धेन सर्वसम्बद्धत्वसम्भवेन सर्वेषां प्रायश्चित्तप्रसङ्गो दुर्वारः स्यात् ॥ ६ ॥ तदिदमभिप्रेत्योक्तं प्रकृत्यधिकरणे ॥ परिणामात् [ शा० ॥ १ ॥ ४ ॥ २७ ॥] इति सूत्र श्रीभाष्ये ॥ नात्रोपदिश्यमानस्य परिणामस्य परस्मिन्ब्रह्मणि दोषावहत्वं स्वभावः प्रत्युत निरङ्कुशैश्वर्यावहत्वमेवेत्यभिप्राय इति ॥ तदेवानुप्राविशत्तदनुप्रविश्येतिकारणावस्थायामात्मतयावस्थितःपरमात्मैव कार्यरूपेण विक्रियमाणद्रव्यस्याप्यात्मतयाऽवस्थाय तत्तदभवदित्युच्यते । एवं परमात्मचिदचित्सङ्घातरूपजगदाकारपरिणामे परमात्मशरीरभूतचिदंशगतास्सर्व एवापुरुषार्थाः । तथाभूताचिदंशगताश्च सर्वे विकाराः । परमात्मनि कार्यत्वं तदवस्थयोस्तयोर्नियन्तृत्वेनात्मत्वम् । परमात्मा तु तयोस्स्वशरीरभूतयोर्नियन्तृतयात्मभूतस्तद्गतापुरुषार्थैर्विकारैश्च न स्पृश्यते । अपरिच्छिन्नज्ञानानन्दमयस्सर्वदैकरूपएव जगत्परिवर्तनलीलयाऽवतिष्ठते । तदेतदाह । सत्यं चानृतं च सत्यमभवदिति । विचित्रचिदचिद्रूपेण विक्रियमाणमपि ब्रह्म सत्यमेवाभवत् । निरस्तनिखिलदोषगन्धमपरिच्छिन्नज्ञानानन्दमेकरूप

मेवाभवदित्यर्थ इति च ॥ ७ ॥ अस्यहि भाष्यस्यायमाशयः । सूक्ष्मत्वस्थूलत्वादिलक्षणावस्थारूपविकाराणां साक्षात्सम्बन्धेन चिदचितोरेवसत्त्वात् । तत्तदवस्थापन्नचिदचिदन्तरात्मतयैव ब्रह्मणस्सत्त्वात् । विकाराणां साक्षात्सम्बन्धेन स्वसम्बन्धिनि दोषावहत्वनैयत्येपि परम्परासम्बन्धेन स्वसम्बन्धिनि तदसम्भवात् । शरीरगतविकाराणां शरीरिषु जीवेषु कर्मसहकारेण दोषावहत्वसम्भवेऽपि कर्म वश्यतागन्धरहिते दोषसम्बन्धगन्धासहिष्णुनिरतिशय ज्ञानशक्त्यादिमति कार्यकारणावस्थयोश्चिदचितो र्नियन्तृत्वेनैवान्तरात्मतयाऽवस्थिते ब्रह्मणि चिदचिद्गतविकाराणां दोषोत्पादनासामर्थ्यात् । परेण ब्रह्मणा लीलार्थं स्वेच्छयैव तत्तदवस्थापन्नाचिदाचिच्छरीरकस्य स्वात्मन एव जगद्रूपेण परिणामस्य क्रियमाणताया श्शास्त्रादवगतेः । तेषां स्वस्मिन्नपि सति दोषावहत्वे सर्वज्ञेन ब्रह्मणा स्वानर्थाय स्वेच्छयैव स्वात्मनस्तथा परिणामकरणासम्भवाच्च नैतेषां विकाराणां ब्रह्मण्यपि दोषावहत्वस्वभावस्सम्भावयितुं शक्यः । प्रत्युतान्यत्र दोषावहत्वेन प्रसिद्धानां विकाराणां ब्रह्मणि सम्बध्यमानानामपि दोषापादनासामर्थ्येन ब्रह्मणो निरङ्कुशैश्वर्यावहत्वमेव सिद्धं भवतीति ॥ ८ ॥ तस्माद्ब्रह्मणि परम्परासम्बन्धेन विकारसद्भावेन कारणत्वानिर्वा-

हात्साक्षात्सबन्धेन तदसत्त्वेन निर्विकारत्वश्रुतेरसङ्को-चेनैव निर्वाहसम्भवाच्च नास्माकं पक्षे कश्चिदपि दोष इति ॥ १०३ ॥ अथैवं सति ब्रह्मणः कारणत्वं न मुख्यंनिर्वहति ॥ तन्निर्वाहकाणां विकाराणां साक्षात्संबन्धेन चिदचितोरेव सत्त्वाद्ब्रह्मण्यसत्त्वात्परम्परासम्बन्धेन तत्सत्त्वस्यापि कारणतानिर्वाहकत्वेऽतिप्रसङ्गादिति चेदत्रोच्यते ॥ यद्धर्मावच्छिन्नं प्रति यद्धर्मावच्छिन्नस्यानन्यथासिद्धनियतपूर्वभाविताऽस्ति तद्धर्मावछिन्नं प्रतितद्धर्मावच्छिन्नं कारणमित्येव कारण लक्षणस्य सिद्धतया परम्परासम्बन्धेन स्थूलत्वावस्था-विशिष्टं ब्रह्म प्रति परम्परासम्बन्धेन सूक्ष्मत्वावस्था विशिष्ट ब्रह्मणः कारणत्वं दुर्वारम् । उक्तकारणलक्षणा-नपायात् ॥ १ ॥ नच स्थूलत्वावस्था सूक्ष्मत्वावस्था चाचित्तत्वगतपरिणामाविशेषौ ॥ तौ चापृथक्सिद्धिस-म्बन्धेनाचित्तत्वे वर्त्तेते । स्वावछिन्नाश्रयत्वसम्बन्धेन चित्तत्वे स्वावच्छिन्नाश्रयाश्रयत्वसम्बन्धेन ब्रह्मणि च सम्बद्धौ । एवं जीवधर्म्मभूतज्ञानगतस्थूलत्वसूक्ष्मत्वे परिणामविशेषौ। तौ च ज्ञानेऽपृथक्सिद्धिसम्बन्धेनजीवे स्वावच्छिन्नाश्रयत्वसम्बन्धेन ब्रह्मणि स्वावच्छिन्नाश्र-याश्रयत्वसम्बन्धेन च सम्बद्धौ । इत्थं च स्वावच्छिन्नाश्रयाश्रयत्वसम्बन्धेन स्थूलत्वावस्थाविशिष्टं ब्रह्म प्रति

सूक्ष्मत्वावस्थाविशिष्टब्रह्मणः कारणत्वमिति हि वक्तव्यम् । तच्च न सम्भवति । ईदृशपरम्परायावृत्त्यनियामकत्वेन तद्घटितकार्यकारणभावे मानाभावादिति वाच्यम् । परम्परासम्बन्धसामान्यस्य कार्यकारणभावानिर्वाहकत्वमेवेति वा वृत्त्यनियामकसम्बन्धसामान्यस्य तदनिर्वाहकत्वमेवेति वा परम्परासम्बन्धसामान्यस्य वृत्त्यनियामकत्वमेवेति वा साक्षात्सम्बन्धसामान्यस्य वृत्तिनियामकत्वमेवेति वा नियमानुपलम्भेनोक्तपरम्परासम्बन्धघटितकार्यकारणभावस्वीकारे क्षतिलेशाभावात् ॥ २ ॥ तथाहि ॥ अवयविगतरूपरसादिकं प्रत्यवयवगतरूपरसादिकस्य स्वसमवायिसमवेतत्त्व सम्बन्धेन कारणतायाः स्वर्गं प्रति यागस्य स्वजन्य पूर्ववत्तासम्बन्धेन कारणतायाः स्वजन्यसंस्कारवत्तासम्बन्धेनानुभवस्य स्मृतिं प्रति कारणतायाश्च तान्त्रिकैः स्वीकारादुक्तपरम्परासम्बन्धानां वृत्त्यनियामकत्वाच्च प्रथमद्वितीयनियमावसिद्धौ ॥ ३ ॥ शय्यायां शेते । खट्वायां शेते । प्रासादे शेते । नीलो घटः । नीलं कालिन्दीजलमित्यादिषु साक्षात्परम्परासम्बन्धानामविशेषेणैवाधाराधेयभावभाननियामकतोपलम्भात्तृतीयनियमोऽसिद्धः ॥ ४ ॥ मेषद्वयसंयोगांगुलिद्वयसंयोगघटाकाशसंयोगादीनां साक्षात्सम्बंधानामेव सतां वृत्त्य

नियामकत्वोपलम्भेन चतुर्थोऽपि नियमोऽसिद्धः॥५॥एवं सम्बन्धविशेषाणामाधेयतादिनियामकत्वे विवादेऽपि तदवच्छेदकतानियामकत्वे विवादो नोपलभ्यते॥ ६ ॥ अत एवात्ममनस्संयोगादिनिष्ठकारणताद्यवच्छेदकतायामात्मादिनिष्ठायां वृत्त्यनियामकानां समवायसम्बन्धावच्छिन्नाधेयत्वादीनां सम्बन्धानां नियामकता सम्प्रतिपन्ना ॥ ७ ॥ इत्थं चोक्तकार्यकारणभावनिर्वाहकतयोक्तस्य सम्बन्धस्य परम्परात्वेपि वृत्तिनियामकत्वस्य स्वीकारेऽस्वीकारेपि वा साक्षात्कारणताद्यवच्छेदकतायां विवादेऽपि वा कारणत्वादिनिरूपितावच्छेदकतावच्छेदकसम्बन्धत्वं निरपवादमेवेत्युक्तकार्यकारणभावो दुरपह्नव एव॥८॥वस्तुतोऽस्त्येव चोक्तपरम्परासम्बन्धस्य वृत्तिनियामकता। नीलं कालिन्दीजलम्। उष्णं जलमित्यादिव्यवहारबलेनापृथक्सिद्धिलक्षणसम्बन्धघटितपरम्परासम्बन्धस्य वृत्तिनियामकतानैयत्यदर्शनात्। इह च स्थूलत्वसूक्ष्मत्वावस्थयोरचित्तत्त्वेन तस्यचित्तत्त्वेनतस्य ब्रह्मणा चापृथक्सिद्धिसम्बन्धस्यैव स्वीकारेणास्य सम्बन्धस्यापृथक्सिद्धिसम्बन्धघटितपरम्परारूपत्वाच्च॥ ९॥ अपृथक्सिद्धिसम्बन्धमात्रघटितपरम्परायाबहुव्यवधानगर्भाया अपि वृत्तिनियामकता नैयत्यं सर्वतः प्रसिद्धम्॥ १०॥ अत एव हि॥ श्रीविष्णुपुराण प्रथमांशे चतुर्दशाध्याये॥ काठिन्यवान्यो

कानुपलम्भात् ॥ १३ ॥ अत एव हि क्वचिदव्यवहिताश्रयादपि व्यवहिताश्रयस्यैव मुख्यमाश्रयत्वं प्रतीयते । यथा जलसम्भृतकुम्भवाहिनि जलं भरत्ययमिति प्रयोगात्कुम्भात्पुरुषस्य जलं प्रत्याधारत्वम्मुख्यम् । यथाच आस्तरणांशुके शेते । शय्यायां शेते । पर्यङ्के शेते प्रासादे शेते । इत्यादिप्रयोगाच्छयानपुरुषं प्रत्याधाराणामास्तरणांशुकादीनां पूर्वपूर्वापेक्षयोत्तरोत्तरस्यैवाधारत्वम्मुख्यम् ॥ १४ ॥ अत्रोत्तरोत्तरगताधारतानां परम्परासम्बन्धावच्छिन्नानामपिपूर्वपूर्वगताधारताप्रयोजकत्वादेव ततो मुख्यत्वं सम्प्रतिपन्नम् ॥ ॥ १५ ॥ तथैव महत्त्वाद्यवस्थायाः प्रकृत्यादिगतत्वेपि प्रकृत्याद्यपेक्षया ब्रह्मण एव तदाधारत्वम्मुख्यम् । प्रकृत्यादितत्त्वे ब्रह्मणो नियन्तृतयानुप्रवेशान्वयव्यतिरेकाभ्यां महत्त्वाद्यवस्थानिष्पत्तितदभावयोरवगमेन तत्तदवस्थाधारप्रकृत्याद्याधारभूतस्य ब्रह्मण एव तत्सत्तोपकारकत्वातिशयावगमात् ॥ १६ ॥ सोऽकामयत । बहु स्यां प्रजायेयेति । सतपोऽ तप्यत।स तपस्तप्त्वा। इदꣳ सर्वमसृजत । यदिदं किञ्च । तत्सृष्ट्वा । तदेवानुप्राविशत्। तदनुप्रविश्य । सच्च त्यच्चाभवत् । निरुक्तंचानिरुक्तंच । निलयनं चानिलयनं च।सत्यं चा नृतं च सत्यमभवत् [ तै० ॥ २ ॥ ६ ॥ ] इति तैत्तिरीयोपनिषदानन्दवल्लीषष्ठानुवाकगतश्रुतौ ब्रह्मणो बहुभवनसङ्क-

ल्पतत्तदनुप्रवेशपूर्वकमेव तत्तद्रूपेण भवनस्य प्रतिपन्नतया तत्तद्गततत्तदवस्थां प्रति ब्रह्मणो बहुभवन संकल्पपूर्वकतत्तदनुप्रवेशस्य प्रयोजकत्वातिशयो ह्यवगम्यते ॥ १७ ॥ इदꣳसर्वमसृजत । यदिदं किञ्च । तत्सृष्ट्वेत्यनेन निमित्तकारणतायाः । तदेवानुप्राविशदित्यादिनोपादानकारणतायाश्च विविच्य प्रतिपादनादुभयविधकारणत्वौपयिकपरस्परविलक्षणोपकारकत्वातिशयौ प्रस्फुटमेव ह्यत्र प्रतीयेते ॥ १८ ॥ तदैक्षत बहु स्यां प्रजायेयेति [ छां०. ॥ ६ ॥ २ ॥ ॥ ३ ॥ ] इत्यादिना छान्दोग्याद्युपनिषदन्तरेष्वपि ब्रह्मणो निमित्तोपादानकारणताद्वयं तदौपयिकविलक्षणोपकारकतातिशयद्वयञ्चेत्थमेव प्रतीयमानं द्रष्टव्यम् ॥ १९ ॥ तस्माच्चिदचिद्गततत्तदवस्थानिष्ठपरम्परासम्बन्धावच्छिन्नाधेयतानिरूपितमाधारत्वं तन्निर्वाह्यमुपादानकारणत्वं च ब्रह्मणो मुख्यमेव ॥ २० ॥ आधारताया अमुख्यत्वेपि वा कार्योपकारकत्वातिशयैकनिर्वाह्यं कारणताया मुख्यत्वं दुरपह्नवमेव । ब्रह्मण्युपकारकत्वातिशयोपलम्भात् ॥ २१ ॥ इदमत्रावधेयम् ॥ अनन्यथासिद्धनियतपूर्वभावित्वं हि कारण लक्षणं वर्णयन्ति तान्त्रिकाः । तत्र स्थूलचिदचिद्विशिष्टं ब्रह्म प्रति सूक्ष्मचिदचिद्विशिष्टब्रह्मणो नियतपूर्वभावित्वं निर्विवादम् । अनन्यथासिद्धत्वमेव चोपपादनीय

मवशिष्यते । तदपि यथोक्तलक्षणोपकारकत्वाति शयस्य बहुश्रुतिप्रतिपन्नत्वात् । जन्माद्यस्य यतः [ शा० ॥ १ ॥ १ ॥२॥ ] प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् [ शा० ॥ १ ॥ ४ ॥ २३ ॥ ] न विलक्षणत्वादस्य तथात्वं च शब्दात् । [ शा० ॥२॥१॥४॥ ] तदनन्यत्वमारम्भणशब्दादिभ्यः।[शा०॥२॥१॥१९॥] इत्याद्यधिकरणेषु सूत्रकारेणापि ब्रह्मणो निमित्तकारणत्ववदुपादानकारणत्वस्यापि सिद्धान्तितत्वाच्च निराबाधमेव सिद्धं भवति । अनन्यथासिद्धत्वं हि प्रामाणिकव्यवहारैकनिर्णेयम् । श्रुतिसूत्रकारव्यवहाराभ्यां न ह्यन्यः कश्चिदस्ति प्रबलः प्रामाणिकव्यवहारः। ताभ्यां च यथोक्तलक्षणाभ्यां तत्सिद्धमेव भवतीति तदर्थं नह्यन्यः कश्चित्प्रयत्न आश्रयणीयः ॥ अतस्सिद्धं नस्समीहितमिति॥२२॥एतेन सूक्ष्मत्वदशापन्नचिदचितोर्विशेषणयोरेव स्थूलत्वदशापन्नचिदचितौ प्रति कारणत्वस्वीकारेण ब्रह्मणो निमित्तकारणत्वमात्रस्वीकारेण च चारितार्थ्यौविशिष्टं प्रति विशिष्टस्योपादानकारणत्वस्वीकारो नावश्यक इति शङ्कापि दूरोत्सारिता।अनन्यथासिद्धनियतपूर्वभावित्वरूपकारणलक्षणसत्त्वे कारणत्वास्वीकारकथाया अनवकाशात् । अन्यथाभाव्यवस्थां प्रति प्रागवस्थायाः कारणत्वस्वीकारेणैव चारितार्थ्यं भाव्यवस्थाविशिष्टं प्रति प्रागवस्थावि-

शिष्टस्यापि कारणत्वानावश्यकतापत्त्या द्रव्यमात्रस्योपादानकारणताविलयप्रसङ्गाच्च ॥२३॥ एवम्। बहुस्यामिति सृष्टयौपयिकसङ्कल्पपरश्रुतिवाक्येष्वेकत्वरूप प्रागवस्थापन्नस्य ब्रह्मणस्स्वस्यैव बहुत्वरूपभाव्यवस्थावत्त्वसङ्कल्पनावगमात् । तादृशप्रागुत्तरावस्थावत्त्वस्योपादानकारणतानिर्वाहकत्वात् । प्रजायेयेतीत्यनेन साक्षाद्ब्रह्मण्येव कार्यतायास्सङ्कल्पितत्वस्य स्फुटमेवावगमात् । घटादिनिमित्तकारणस्य कुलालादेः कार्यकारणानुप्रवेशं विनैव कार्यनिर्वाहकत्वदर्शनेन निमित्तकारणतां प्रति कार्यकारणानुप्रवेशानावश्यकतया कार्यकारणानुप्रवेशपूर्वकं ब्रह्मणि श्रूयमाणायाः कार्योपकारकतायानैरर्थक्यप्रसङ्गाच्च ब्रह्मण उपादान कारणता दुर्वारा ॥ २४ ॥ इदं पुनरत्रावधेयम् । अव्यवहितस्यकारणत्वस्वीकारेण व्यवहितस्य कारणत्वं नापलपितुं शक्यम्। तथा सति स्वर्गप्रतियागजन्यापूर्वकारणतया यागकारणतायाः । स्मृतिं प्रत्यनुभव जन्यसंस्कारकारणतयाऽनुभवकारणतायाः । पाकं प्रतिज्वालाकारणतयाकाष्ठकारणतायाश्चापलापप्रसङ्गात् ॥ यागेन स्वर्गं साधयति । प्राक्तनेनानुभवेनेदमयं स्मरति । काष्ठैरोदनं पचति । इत्यादिव्यवहारबलेन यागादीनामपि स्वर्गादिकं प्रति कारणत्वं दुर्वारम् । पदार्थक्लृप्तेः प्रामाणिकव्यवहारमात्रमूलत्वादिति चेत्॥

यतो वा इमानि भूतानि जायन्ते ॥ तस्माद्वा एतस्मा दात्मन आकाशस्सम्भूतः ॥ बहु स्यां प्रजायेयेति ॥ इत्यादिपरश्शतप्रमाणेभ्यो ब्रह्मणोपि कारणत्वं दुरपह्नवमिति तुल्यम् । प्रमाणभूतव्यवहारबलेन तत्तत्कार्य निर्वाहकशक्तौ व्यवहिताव्यवहितयोस्तुल्यमवगम्य मानायामव्यवहितकारणतया व्यवहितकारणत्वं नापह्नोतुं शक्यम् । तादृशशक्त्यवगमानवगमयोरेवानन्यथासिद्धत्वतदभावनियामकत्वादन्ततः कार्यनिर्वाहक शक्तिमत्त्वस्यैव कारणतारूपत्वाच्च ॥ तस्माद्ब्रह्मणो जगदुपादानकारणत्वं ब्रह्मणापि दुरपह्नवमेव सिद्धं भवतीति ॥२८॥ इत्थमस्मन्मते ब्रह्मणो जगदुपादान कारणत्वम्मुख्यमेव निर्बाधं निर्वहतीति तत्प्रतिपादक वेदस्य प्रामाण्यभङ्गप्रसङ्गलेशाभावान्न भवन्मत इव भङ्ग्यन्तरेण तत्प्रामाण्यं भञ्जनीयमिति ॥ १०४ ॥ अथ त्वन्मत एवायं दुरुद्धरो दोषो निपततीति । योऽस्मास्वारोपित इति निरूप्यते ॥ १०५ ॥ तथा हि ॥ जन्माद्यस्य यतः [ ॥ १ ॥ १ ॥ २ ॥ ] प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् [ १ ॥ ४ ॥ २३॥] न विलक्षणत्वादस्य तथात्वं च शब्दात् [॥ २ ॥ १ ॥ ४ ॥ ] इत्यादिष्वधिकरणेषु सूत्रकारेण ब्रह्मणो जगत्कारणत्वं निरूपितमिति ॥ तदधिकरणविषयवाक्यतया सूत्रकाराभिमताभिः श्रुतिभिर्ब्रह्मणो जगत्कारणत्वं प्रति-

पाद्यत इति च निर्विवादम् ॥ १०६ ॥ एवं स्थिते । तदनन्यत्वमारम्भणशब्दादिभ्यः [ २ ॥ १ ॥ १९ ॥] इत्यधिकरणभाष्ये तव भाष्यकारः परमार्थतो ब्रह्मणो जगत्कारणत्वं नास्तीति स्वकपोलकल्पित-कुतर्कमात्रसिद्धस्वमतानुरोधेन तदधिकरणस्य कासां चिच्छ्रुतीनां च ब्रह्मणो जगत्कारणतानिषेधपरतां प्रसह्यव्याकुर्वन्स्वस्यसूत्रकारस्य श्रुतीनां चोन्मत्तचेष्टत्वमेव प्रतिष्ठापयामासेति खलुवेदान्ततत्त्वविदो विद्वांसो विहसन्ति ॥ १०७ ॥ जन्माद्यधिकरणभाष्ये हि त्वदीयभाष्यकारेण । अस्य जगतोनामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्त्यरचनारूपस्य । जन्मस्थितिभङ्गं यतस्सर्वज्ञात्सर्वशक्तेः कारणाद्भवति । तद्ब्रह्मेति वाक्यशेष इति व्याकुर्वता । न यथोक्तविशेषणस्य जगतो यथोक्तविशेषणमीश्वरम्मुक्त्वाऽन्यतः प्रधानादचेतनादणुभ्यो वा भावाद्वा संसारिणो वोत्पत्त्यादि सम्भावयितुं शक्यमिति च ब्रुवता परस्यैव ब्रह्मणो जगत्कारणत्वमन्यत्र प्रधानादिषु तत्सम्भावनाया अपि प्रतिषेधपूर्वकं प्रस्फुटमेव प्रतिष्ठापितम्॥१०८॥शास्त्रयोनित्वाधिकरणभाष्येप्युक्तम्। शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्माधिगम्यत इत्यभिप्राय इति॥ १०९ ॥ प्रकृत्यधिकरणभाष्येपि ।

प्रकृतिश्च । उपादानकारणं च ब्रह्माऽभ्युपगन्तव्यं निमित्तकारणं चेत्यारभ्यप्रपञ्चेन प्रतिष्ठापितं ब्रह्मण उपादानकारणत्वं निमित्तकारणत्वेन सहैव ॥ ११० ॥ न विलक्षणत्वादस्य तथात्वं च शब्दादित्यधिकरण भाष्येपि । ब्रह्मास्य जगतः कारणं प्रकृतिश्चेत्यस्य पक्षस्याक्षेपस्स्मृतिनिमित्तः परिहृतः । तर्कनिमित्तइदानीमाक्षेपः परिह्रियत इति वदता पूर्वोक्तार्थस्य तर्कनिमित्ताक्षेपपरतामस्याधिकरणस्याभिधाय ॥ दृश्यतेतु । [ शा० ॥ २ ॥ १ ॥ ६ ] इति सूत्रं व्याकुर्वता त्वद्भाष्यकारेण ॥ यदुक्तं विलक्षणत्वान्नेदं जगद्ब्रह्मप्रकृतिकमिति । नायमेकान्तः । दृश्यते हि लोके चेतनत्वेन प्रसिद्धेभ्यः पुरुषादिभ्यो विलक्षणानां केशनखादीनामुत्पत्तिः । अचेतनत्वेन प्रसिद्धेभ्यो गोमयादिभ्यो वृश्चिकादीनामित्यादिना ग्रन्थे नायमेवार्थः प्रतिकूलतर्कप्रतिक्षेपपूर्वकं प्रतिष्ठापितः ॥ ॥ १११ ॥ इत्थं पूर्वं ब्रह्मणो जगत्कारणत्वं प्रतिष्ठाप्य पश्चात् तदनन्यत्वमारम्भणशब्दादिभ्य इत्याधिकरणभाष्ये ॥ अभ्युपगम्य चेमं व्यावहारिकं भोक्तृभोग्यलक्षणं विभागम् । स्याल्लोकवदिति परिहारोऽभिहितः । न त्वयं विभागः परमार्थतोऽस्ति । यस्मात्तयोः कार्यकारणयोरनन्यत्वमवगम्यते । कार्यमाकाशादिकं बहुप्रपंचं जगत् । कारणं परं ब्रह्म । तस्मात्कारणात्प-

रमार्थतोऽनन्यत्वं व्यतिरेकेणाभावः कार्यस्यावगम्यते ॥ इत्यादिना ॥ व्यवहारावस्था परमार्थावस्था चेत्यव स्थाद्वयं स्वयं कल्पयित्वा ॥ इतः प्राचीनं कृत्स्नं ब्रह्मणो जगत्कारणत्वादिवादं व्यवहारावस्थामाश्रि- त्याभ्युपगम्यवादमात्ररूपमभिधाय परमार्थतः कार्य- स्य प्रपञ्चस्याभावमेव प्रतिपादयता त्वद्भाष्यकारेण ब्रह्मणः परमार्थतो जगत्कारणत्वाभावस्यैव सिद्धान्ति- तत्वाच्छ्रुतीनां सूत्रकारस्य च तदभिप्रायकताया एव वर्णनाच्च स्वस्य श्रुतीनां सूत्रकारस्य च प्रस्फुटमुन्म- त्तत्वेन हि स्थापितं भवति।स्वैरं पूर्वोत्तरपरस्परविरु- द्धार्थवादित्वात् ॥ ११२ ॥ इदमत्रावधेयम् । ब्रह्मणो हि जगत्कारणत्वं न लोकसिद्धम् । धर्मिणो ब्रह्मण एव लोकासिद्धत्वात् ॥ १ ॥ एवं सति केनापि प्रमाणा- न्तरेणासिद्धं जगत्कारणत्वं ब्रह्मणः किमर्थं प्रतिपाद- यति श्रुतिःसूत्रकारो वा ॥ २ ॥ प्रतिपाद्य वा पुनः किमर्थं प्रतिषेधति ॥ ३ ॥ प्रतिषेधस्यैव तात्पर्यविष- यत्वे प्रक्षालनाद्धीतिन्यायेन प्रथममेव ह्यप्रतिपादनमु- चितम् ॥ ४ ॥ भावाभावलक्षणयोः परस्परविरुद्धयो- र्धर्मयोरेकत्र प्रतिपादने प्रतिपादयितुः प्रतारकत्वम- प्रमाणत्वमुन्मत्तत्वं वा कथं परिहर्तुं शक्यम्भविष्य- ति ॥ ५ ॥ लोकहितबोधनप्रवृत्तौ श्रुतिसूत्रकारौ प्रा- गेव भ्रान्तं लोकं पुनर्भ्रमयितुं प्रवृत्ताविति वा कथं

हारः कुतो भवतीति ॥ ११५ ॥ नहि तावत् । यतो वा इमानि भूतानि जायन्ते ॥ [ तै० ॥ ३ ॥ १ ॥ ॥ ३ ॥ ] तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः ॥ [तै० ॥ २ ॥ १ ॥ २ ॥] इत्यादिषु जगद्ब्रह्मणोः कार्यकारण भावप्रतिपादक श्रुतिषु वा ॥ एष सर्वेश्वर एष भूताधि पतिरेषभूतपाल एष सेतुर्विधारण एषां लोकानामसम्भे दाय [ बृ० ॥ ६ ॥ ४ ॥ २२ ॥ ] इत्यादिष्वीशेशितव्य भावप्रतिपादकश्रुतिषु वा व्यवहारावस्थाविषयतया भवदभिमतासु । व्यवहारावस्थायां कार्यस्य जगतो ब्रह्म कारणं भवतीति वा । ईशितव्यस्य जगतो ब्रह्मे शितृ भवतीति वा प्रतिपादनं दृश्यते । येन व्यवहा-रावस्थानाम काचिदवस्था श्रुतिप्रतिपन्नाऽभ्युपगन्त व्या स्यात् ॥ ११६ ॥ अपि तर्हि स्वाभाविकं पारमा-र्थिकं चैव जगद्ब्रह्मणोः कार्यकारणभावमीशेशित व्यभावं च प्रतिपादयन्त्यो दृश्यन्त एताश्श्रुतयः ॥ ॥ ११७ ॥ न खलूपाधिं कञ्चिदनुपादायैव प्रमाणभूतेन शास्त्रेण कस्यचित्कश्चिद्धर्मः प्रतिपाद्यमान औपाधि कोऽपारमार्थिको वा प्रामाणिकैरभ्युपगन्तुं शक्यः ११८ अपि तु स्वाभाविकः पारमार्थिक इत्येवाभ्युपगन्तव्यः ॥ उपाध्यनुपादानात्प्रमाणभूतशास्त्रप्रतिपन्नत्वाच्च ११९ ॥ अतो न व्यवहारावस्थानाम काचिदवस्था श्रुतिप्रति-पन्नाऽभ्युपगन्तुं शक्या ॥ १२० ॥ नापि च ॥ यत्र

नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा [ छां० ७ ॥ २४ ॥ १ ॥ ] यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् ॥ [ बृ०॥६॥ ५ ॥१५॥] इत्यादिषु श्रुतिषु परमार्थावस्थाविषयतया भवदभिमतासु । परमार्थावस्थायामिदमित्थं भवतीति प्रतिपादनं दृश्यते । येन परमार्थावस्थानाम काचिदवस्था । तद्व्याञ्जिता च काचिदन्यावस्थेत्यवस्थाद्वयमभ्युपगन्तव्यं स्यात् ॥ १२१ ॥ नच यत्र नान्यत्पश्यतीत्यादिवाक्ये छान्दोग्यसप्तमप्रपाठकचतुर्विंशखण्डप्रथमखण्डिकागते । यत्र त्वस्य सर्वमात्मैवाभूदित्यादिवाक्ये बृहदारण्यकषष्ठाध्यायपञ्चमब्राह्मणपञ्चदशखण्डिकागते च ब्रह्मानुभवदशायां ब्रह्मभिन्नपदार्थज्ञानाभावप्रतिपादनात्तादृशपदार्थस्य कस्यचित्पारमार्थिकत्वे तदानीमपि तज्ज्ञानावश्यकत्वाच्च । ब्रह्मेतरपदार्थः कोपि परमार्थतो नास्त्येव । अत एव ब्रह्मानुभवदशायां नोपलभ्यते । ब्रह्मानुभवात्प्राक्तु भ्रान्त्या नानापदार्थावभासमात्रमित्यवगम्यते । इत्थं च ब्रह्मेतरपदार्थभानाभावविशिष्टब्रह्मानुभवदशैव परमार्थावस्थानाम । तत्प्राचीनभ्रान्तिदशैव व्यवहारावस्था नामेत्यस्मदभिमतमवस्थाद्वयं श्रुतिप्रतिपन्नमेवेति वाच्यम्।दर्शितश्रुतिवाक्ययोस्सविभूतिकविपुलसुखरूपब्रह्मानुभवदशायां कृत्स्नस्य जगतो ब्रह्मान्तर्भूततया तद्विभूतित्वेन

सुखरूपतया च साक्षात्कारविषयतया तदनन्तर्भूतं दुःखरूपं च किमपि वस्तु न पश्यत्यनुभवितेत्येतदर्थमात्र परतया तदानीं प्रागनुभूतजगतो भानमात्राभावपरत्वा भावेन जगन्मिथ्यात्वासिद्ध्या भवदभिमतावस्थाद्वयस्य दर्शितश्रुतिवाक्याभ्यामसिद्धेः ॥ १२२ ॥ इदमत्रावधेयम् ॥ यथावस्थितब्रह्मसाक्षात्कारात्पूर्वमनुभूतं जगत्तादृशसाक्षात्कारदशायां नाऽनुभूयतएवेति न तच्छ्रुत्यर्थः। यत्र नान्यदित्यादि दर्शितच्छान्दोग्यश्रुतिप्रकरणे ॥ स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति । [ छां ॥ ७ ॥ २५ ॥ २ ॥ ] न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् । सर्वꣳह पश्यः पश्यति सर्वमाप्नोति सर्वशः ॥ [ छां ॥ ७ ॥ ॥ २६ ॥ २ ॥ इति श्रवणेन बृहदारण्यके यत्रत्वस्येत्यादिदर्शितषष्ठाऽध्यायश्रुतिवाक्यप्रकरणे ॥ तत्समानार्थकचतुर्थाध्यायचतुर्थब्राह्मणचतुर्दशखण्डिकायां च ॥ अस्य सर्वमात्मैवाभूत् ॥ येनेदꣳ सर्वं विजानाति तं केन विजानीयात् ॥ इतिश्रवणेन च यथाऽवस्थितब्रह्मसाक्षात्कारवतो मुक्तस्य सर्वलोककामचारसर्ववस्तुसाक्षात्कारसर्ववस्तुप्राप्तीनां सद्भावस्य स्पष्टमेवाऽवगमात् । सर्वत्वस्यनानावस्तुगतसमुदायत्वरूपतया तदानींजगद्भानाभावे तत्प्रकरणे सर्व पदप्रयोगस्यैवार्थवत्त्वासम्भवाच्च ॥१॥परन्तु प्रागनुभूतं नानावस्तुसमु-

दायात्मकं जगदेव सर्वशब्देन निर्दिश्य तस्यैव ब्रह्मा-
पृथक्सिद्धतया तदन्तर्भूतत्वेनैवानुभवस्तदानीं जायत
इत्येतावदेव दर्शितश्रुतितास्सिध्याति ॥ २ ॥ तदिदमे-
वोच्यते ॥ दर्शितबृहदारण्यकश्रुतौ ॥ अस्य सर्वमात्मै
वाभूदिति ॥ ३ ॥ ब्रह्मसाक्षात्कृतवतो मुक्तस्य कृत्स्नं
जगद्ब्रह्माप्रथक्सिद्धमेवसाक्षात्कारे प्रत्यभादिति तदर्थः।
॥४॥दर्शितछांन्दोग्यप्रकरणेपि । स एवाधस्तात्स उप
रिष्टात्स पश्चात्सपुरस्तात्सदक्षिणतस्सउत्तरतस्सएवेदꣳ
सर्वमिति[छां॥ ७ ॥ २५ ॥ १ ॥ ] इत्यारभ्य॥आत्मै-
वेद ꣳ स सर्वमिति [छां॥७॥२५॥२॥]इत्यन्तेन जगत-
स्सर्वशब्दवाच्यस्य ब्रह्मापृथक्सिद्धत्वमुपपाद्य तत एव
तत्तादात्म्येन जगतोनुभव इत्युपपादितम् ॥ ५ ॥ न
चैवं तर्हि । यत्र नान्यत्पश्यतीत्यन्यपदार्थदर्शननिषेध
कथमुपपद्यते । विशेषणविशेष्यभावापन्नयोरपि जग-
द्ब्रह्मणोः परस्परभेदस्य भवत्सम्मतत्वादिति वाच्यम्।
पृथक्सिद्धत्वलक्षणभेदस्यैव तत्रान्यपदार्थत्वेनादोषात्
॥६॥ द्वयोर्मृत्तिपण्डयोर्विभागदशायां भेदव्यपदेशस्या-
विभागेन सम्मिलितत्वदशायामैक्यव्यपदेशस्य च द-
र्शनेन पृथक्सिद्धयपृथक्सिद्धयोरपि भेदाभेदव्यपदेश
विषयत्वसम्भवेनपृथक्सिद्धिलक्षणभेदविषयतया यत्र-
नान्यत्पश्यतीत्यन्यदर्शनानिषेधः।अपृथक्सिद्धिलक्षणै-
क्यविषयतया।सएवेदꣳसर्वमित्यादि सामानाधिकरण्य-

निर्देशश्च सङ्गच्छत एव ॥७॥ तस्माज्जगन्मिथ्यात्वकोलाहलस्य नात्रावकाश इति भवदभिमतमवस्थाद्वयं नैतच्छ्रुतिवाक्यतस्सिध्यतीति ॥ १२३ ॥ अथप्रमाण भूतयोश्शास्त्रयोः परस्परविरोधपरिहारायैवेदमवस्था द्वयं कल्पनीयमिति चेन्न । विवेकिनां विरोधस्यैवानुपलम्भात् । आपाततः प्रतीतस्यापि विरोधस्येदृशकल्पनामन्तरेणैवपरिहारे दर्शितकल्पनानावश्यकत्वात् । कल्पनेप्यभिमतासिद्धेश्च ॥ १२४ ॥ अविरोधस्तावद्दर्शितोऽधस्ताद्दर्शयिष्यते च यथावसरमुपरिष्टाद पीतिकल्पनेऽप्याभिमतासिद्धिरेवेहनिरूप्यते ॥१२५॥ इदमत्रबोध्यम् ॥ परस्परविरुद्धार्थप्रतिपादकत्वे ह्यपौरुषेयानित्यानिर्दोषशास्त्रस्य वेदस्याऽप्रमाणत्वादिप्रसङ्गो भवति ॥१॥ स हि परिहर्तव्यः ॥२॥ स च प्रसङ्गो ब्रह्मणो जगत्कारणत्वप्रतिपादनाविकारप्रतिषेधाभ्यां प्राप्तोऽभ्युपगतः ॥ ३ ॥ तत्परिहारार्थं हीदृशदशाद्वयकल्पनं भवताम् ॥ ४ ॥ न च तत्परिहारस्सम्भवति । दर्शितावस्थाद्वयकल्पनेन ॥ ५ ॥ तथा हि यतो वा इमानि भूतानि जायन्त इत्यादि शास्त्रं ब्रह्मणो जगत्कारणत्वं प्रतिपादयति । अन्ततः कृत्स्नस्य जगतो मिथ्यात्वेन परमार्थतस्तदभावमेव प्रतिपादयति नेह नानास्ति किञ्चनेत्यादि शास्त्रमिति हि भवन्मतम् ॥ ६ ॥ तथा सति कार्यभूतस्य जगत एवाभावेन कारणत्वस्यै-

वासिद्ध्या ब्रह्मणो जगत्कारणत्ववादिशास्त्रस्याप्रमाणत्वमेव पर्यवसन्नं भवति । तदभाववति तत्प्रकारकधीजनकत्वस्यैवाप्रमाणत्वरूपत्वात्। द्वैतप्रतिपादकशास्त्रस्य तात्त्विकं प्रामाण्यं नाऽस्तीत्येव भवत्सिद्धान्ताच्च॥७॥ इत्थं च। यतो वा इमानि भूतानि जायन्ते [ तै० ॥ ३ ॥ १ ॥ २ ॥ ] आत्मन आकाशस्सम्भूतः [ तै० ॥ २ ॥ १ ॥२॥ बहुस्यां प्रजायेयेति [ तै० २ ॥ ॥ ६ ॥ २ ॥ ] इत्यादीनां ब्रह्मणो जगत्कारणत्ववादिशास्त्राणाम् । नेह नानास्ति किञ्चन [ बृ० ॥ ६ ॥ ॥ ४ ॥ १९ ॥ ] यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् [ बृ० ॥ ६ ॥ ५ ॥ १५ ॥ ] सवा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म [ बृ०॥६॥४॥२५॥ स एष नेति नेत्यात्मा [ बृ०॥६॥ ॥ २ ॥ ४ ॥ ] अस्थूलमनणु ॥ [ बृ० ॥ ५॥ ८ ॥८॥ इत्यादीनां कृत्स्नप्रपञ्चनिषेधमुखेन ब्रह्मणो विकारप्रतिषेधमुखेन च ब्रह्मणो जगत्कारणत्वप्रतिषेधपरतया भवदभिमतानां शास्त्राणां च मिथो विरोधोपि दुरुद्धर एव हि तिष्ठति। ८। अभिहितोहि त्वद्भाष्यकारेणोदाहृतशास्त्रेषु पूर्वशास्त्राणां परशास्त्रैर्बाधमाश्रित्य कृत्स्नप्रपञ्चप्रतिषेधः। ९। यथोक्तं तेनारम्भणाधिकरणभाष्ये ॥ तस्मादन्त्येन प्रमाणेन प्रतिपादित आत्मैकत्वे समस्तस्य प्राचीनस्य भेदव्यवहारस्य

बाधितत्वान्नानेकात्मकब्रह्मकल्पनावकाशोस्ति । ननु मृदादिदृष्टान्तप्रणयनात्परिणामवद्ब्रह्मशास्त्रस्याभिमतमिति गम्यते । परिणामिनो हि मृदादयोऽर्था लोके समधिगता इति । नेत्युच्यते । स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयोब्रह्म [ बृ० ॥ ६ ॥ ४ ॥ ॥ २५ ॥] स एष नेति नेत्यात्मा [ बृ० ॥ ६॥२॥४॥] अस्थूलमनणु ॥ [ बृ० ॥ ५ ॥८॥ ८ ॥ इत्यादिभ्यस्सर्वविक्रियाप्रतिषेधश्रुतिभ्योब्रह्मणः कूटस्थत्वावगमात् । नह्येकस्य ब्रह्मणः परिणामधर्मवत्त्वं तद्रहितत्वं च शक्यंप्रतिपत्तुम् । स्थितिगतिवत्स्यादिति चेन्न कूटस्थस्येति विशेषणात् । नहि कूटस्थस्य ब्रह्मणः स्थितिगतिवदनेकधर्माश्रयत्वं सम्भवति । कूटस्थं च ब्रह्मसर्वविक्रियाप्रतिषेधादित्यवोचामेति ॥१०॥

वयं चात्र विशेषतो विस्मयामहे । बहुस्यां प्रजायेयेतीत्यादिश्रुतिभिस्सृष्टेः प्राङ्नामरूपविभागाभावे नैकत्वावस्थापन्नस्य सूक्ष्मचिदचिद्विशिष्टब्रह्मणः पश्चान्नामरूपविभागेनैकत्वावस्थाप्रहाणपूर्वकंस्थूलचिदचिद्वैशिष्ट्यलक्षणबहुत्वापत्तिर्हि प्रस्फुटं प्रतिपाद्यते । सैव हि ब्रह्मणःपरिणामो नाम । प्रागवस्थाप्रहाणेनावस्थान्तरप्राप्तेरेव परिणामशब्दार्थत्वात् । इतश्चेदृशपरिणामवत्त्वेन ब्रह्मणोजगदुपादानकारणत्वमाभिः प्रतिपादितं भवति।प्रकृत्यधिकरणे॥परिणामात् [शा०॥१॥४॥२७॥ ]

इति सूत्रं प्रणयता सूत्रकारेणापि । ब्रह्मजगदुपादानकारणं भवत्येव । परिणामादितीदृशं परिणाममेव हेतूकृत्य तदेव साधितम् । इत्थंश्रुतिभिस्सूत्रकारेण चैकत्वावस्थाप्रहाणपूर्वकानेकत्वावस्थाप्राप्तिलक्षणपरिणामवत्त्वेनैव ब्रह्मणो जगदुपादानकारणत्वे प्रस्पुटं प्रतिपाद्यमाने पश्यतोहर इव साक्षात्तद्विरुद्धमनेकात्मक ब्रह्मकल्पनावकाशाभावं ब्रह्मणः परिणामस्वीकारासम्भवं च ब्रुवंस्त्वद्भाष्यकारः प्रत्यक्षापलापेविद्वद्गोष्ठयां परिहास्योभवेयमहमिति कथं नालज्जतेति ॥ ११ ॥ नन्वस्मद्भाष्यकारेण तदनन्यत्वमिति सूत्रभाष्यान्ते । सूत्रकारोपि परमार्थाभिप्रायेण तदनन्यत्वमित्याह । व्यवहाराभिप्रायेण तु स्याल्लोकवदितिमहासमुद्रादिस्थानीयतां ब्रह्मणः कथयति अप्रत्याख्यायैवकार्य प्रपञ्चं परिणामप्रक्रियां चाश्रयति । सगुणोपासनेषूपयोक्ष्यत इतीति वदतासर्वमिदं समाहितमेवेति चेत् ॥१२ ॥ किं समाहितम् ॥ १३ ॥ नहि तत्र सूत्रकारेण अयं परमार्थांशः । अयं व्यावहारिकांश इति किञ्चिदभिहितम् ॥ १४ ॥ अपितु सूत्रकृतस्तादृशाभिप्रायकता च त्वद्भाष्यकारेणैव कल्पिता ॥ १५ ॥ तां कल्पनां कल्पयतापि त्वद्भाष्यकारेण । लोकव्यवहाराभिप्रायेण मिथ्यैव सूत्रकारेण प्रथमं ब्रह्मणो जगत्कारणत्वमभिहितम् । पश्चात्परमार्थतस्तत्प्रतिषेध

श्च कृत इत्यङ्गीकुर्वता त्वद्भाष्यकारस्य श्रुतिशारीरकशास्त्रयोश्चास्माभिरापादितमप्रामाण्यादिकमङ्गीकृतमेव भवति ॥ १६ ॥ नतु तत्परिहारः कृतो भवति ॥ १७॥ परिणामप्रक्रियामिथ्याभूतापि सगुणोपासनोपयोगित्वाभिप्रायेणसूत्रकारेण नप्रत्याख्यातेत्यभिधानमपिलोकवञ्चनमात्रम्।निर्गुणविद्यात्वेन भवदभिमतसद्विद्याप्रकरणएव तदाम्नानात् । सगुणोपासनमात्रोपयोगित्वेऽत्र तदभिधाने कारणाभावाच्च ॥ १८ ॥ छान्दोग्ये षष्ठप्रपाठकेद्वितीये खण्डे सद्विद्याप्रकरण एव हि । सत्त्वेव सोम्येदमग्रआसीत् । एकमेवाद्वितीयम् । तदैक्षत बहुस्यां प्रजायेयेति । तत्तेजोऽसृजत । तत्तेज ऐक्षत । बहुस्यां प्रजायेयेति । तदपोऽसृजतेत्यादिना ब्रह्मण एकत्वावस्थाप्रहाणपूर्वकबहुत्वावस्थाप्राप्तिरूपपरिणामप्रक्रियाश्रूयते ॥ १९ ॥ एवं शारीरकशास्त्रस्य श्रुतिषु सन्दिग्धार्थानां न्यायसञ्चारेण विवेचनपूर्वकं तत्त्वनिर्धारणैकप्रयोजनाय प्रवृत्तस्य लोकव्यवहारानुवादकत्वमुपासनार्थमिथ्यार्थप्रतिपादकत्वं वा न कथञ्चिदपि सुवचम् ॥ २० ॥ श्रुतौ प्रतीकोपासनेषु फलार्थं क्वचिद्दृष्टिविधिदर्शनेनोपासनप्रकरणगतश्रुतिवाक्यानांकथञ्चित्तयोस्सम्भवदुक्तिकत्वेपि तत्त्वार्थनिर्धारणपरशास्त्रस्य हि तेन सम्भवतः ॥ ॥२१॥ प्रत्युतोपासनपरश्रुतिवाक्यार्थविचारे प्राप्ते मि

ध्यार्थप्रतिपादकत्वे च कस्यचिद्वाक्यस्य स्थिते तदर्थस्य पारमार्थिकत्वशङ्कापरिहाराय । अयमत्र पारमार्थिक आकारः । अयंचोपासनार्थं कल्पितआ-कार इति विविच्य तत्त्वाभिधानमेवावश्यकर्तव्यम् ॥ ॥ २२ ॥ अतएव हि सूत्रकारेण ॥ अर्भकौकस्त्वात्त-द्व्यपदेशान्नेति चेन्न निचाय्यत्वादेवं व्योमवच्च[शा०॥१॥ ॥ २ ॥ ७ ॥अल्पश्रुतेरिति चेत्तदुक्तम् ॥ १ ॥३॥२०। हृद्यपेक्षयातुमनुष्याधिकारत्वात् [ ॥ १ ॥ ३ ॥ २४॥ इत्यादिषु सूत्रेषूपासनार्थं श्रुतिवाक्योक्ताल्पाकारस्य तात्त्विकत्वशङ्कापरिहारः क्रियमाणो दृश्यते ॥ २३ ॥ एवंश्रुतिवाक्यप्रतिपन्नानामप्यतात्त्विकाकाराणांतात्त्वि कत्वभ्रमंपरिहरता सूत्रकारेण । ब्रह्मणउपादानकारण-त्वासम्भवं वदतां वादिनां खण्डनपूर्वकं न्यायसञ्चारेण तत्त्वनिर्धारणावसरे परिणामात्प्रकृतिश्च ब्रह्मेति ब्रह्मण उपादानकारणत्वस्थापकहेतुतयोपन्यस्तस्य परिणा-मवत्त्वस्यातात्त्विकाकारत्वेन तदभिप्रेतत्ववर्णनं नह्य नुन्मत्तः कश्चित्कुर्यात् ॥ २४ ॥ किञ्च ॥ सूत्रकारेण पूर्वाधिकरणेषु ब्रह्मणः परिणामादिना हेतुनोपादानका रणत्वं समर्थितमिति ह्यविवादम् ॥ २५ ॥ तदनन्यत्व मारम्भणशब्दादिभ्य इत्याधिकरणे परं तत्प्रतिषेध एव प्रतिपाद्यते सूत्रकारेणेति तु भवन्मतम् ॥ २६ ॥ यद्येवमेव सूत्रकाराभिप्रायस्स्यात् ॥ २७ ॥ तदापूर्वा-

धिकरणानामस्याधिकरणस्य च परस्परविरोध आपण्डितपामरं अस्फुटमेव किल प्रतीयते ॥ २८ ॥ तथा सति श्रुतिवाक्येष्वप्यतात्त्विकाकारप्रतिपत्तौ विरोधप्रतिपत्तौ वा परिहारं कुर्वता सूत्रकारेण स्ववाक्यप्रतिपन्नातात्त्विकाकारविरोधयोस्स्वरूपकीर्तनपरिहारौ कुतो नाकारिषाताम् ॥ २९ ॥ व्यवहारावस्था परमार्थावस्था चेति भवदभिमतमवस्थाद्वयमिहावश्यवक्तव्यं कुतो वा स्वयं नाभिहितम् ॥ ३० ॥ अतो नास्य सूत्रस्येदृशाभिप्रायकत्वं सूत्रकारस्य सुवचम् ॥ ३१ ॥ न चैतत्सूत्रं प्रपञ्चस्य मिथ्यात्वोपपादनेन परमार्थतः प्रतिषेधपरमवगम्यते । तद्घटकशब्दतस्स्वभावतस्तदर्थानवगतेः । अस्मिन्नधिकरणे जगन्मिथ्यात्वोपपादने पूर्वाधिकरणैस्सह सङ्गतिलेशासम्भवाच्च ॥३२॥ अपितु ॥जगद्ब्रह्मणोः कार्यकारणभूतयोरभिन्नत्वमात्रमस्मिन्नधिकरणे प्रतिष्ठाप्यते ॥३३॥ तत्प्रतिष्ठापनं च । पूर्वम् । असदिति चेन्नप्रतिषेधमात्रत्वात् [ ॥ २ ॥ १ ॥ ७ ॥ ] इत्यादिषु सूत्रेषु सत्कार्यवादेन कार्यकारणयोरभेदमाश्रित्य ब्रह्मण उपादानकारणत्वसमर्थनात् । कार्यकारणयोरनन्यत्वमपि न सम्भवति । जगद्ब्रह्मणोरनन्यत्वमपि न सम्भवति । बुद्धिशब्दान्तरादिभ्यो हेतुभ्य इति प्रत्यवतिष्ठमानानां वैशेषिकादीनां प्रत्याख्यानाय क्रियत इति तावदस्माकं

सम्भवति सङ्गतिः ॥ ३४ ॥ न चेदृशी तव काचित्सङ्गतिर्मिथ्यात्वप्रतिपादनेपि सम्भवति ॥ ३५ ॥ किञ्च यदि मिथ्यात्वं ब्रह्मान्यस्येह प्रतिपिपादयिषितं स्यात् । तदा । तदन्यदसत्यमारम्भणशब्दादिभ्य इत्येव सूत्रं प्रणेतव्यं स्यात् । नतु । तदनन्यत्वमारम्भणशब्दादिभ्य इति । जगतो ब्रह्मानन्यत्वस्यसत्यमिथ्यार्थयोरैक्यासम्भवेनासम्भवात्तत्प्रतिपादनस्य प्रकृतानुपयोगित्वेन निष्फलत्वात् । प्रत्युत जगतो ब्रह्माभिन्नत्वप्रतिपादने जगतोपि सत्यताया ब्रह्मणोपि मिथ्यात्वस्य वा प्रसङ्गेन भवदभिमतविपरीतार्थसाधकत्वाच्च ॥ ३६ ॥ न च कार्यासत्यत्वप्रतिपादकानामारम्भणादिशब्दघटितवाक्यानामुदाहरणेनास्य सूत्रस्य जगन्मिथ्यात्वपरत्वमेव सूत्रकाराभिमतमित्यगत्या स्वीकार्यमिति वाच्यम् । जगतो ब्रह्माभिन्नत्वं साध्यं प्रतिज्ञाय तत्साधकतयैवारम्भणादिशब्दघटित वाक्यानां सूत्रकारोदाहृतत्वेन तेषां जगतो ब्रह्माभिन्नत्वप्रतिपादनं प्रत्येवौपयिकत्वावगमेनमिथ्यात्वप्रतिपादनौपयिकत्वासम्भवात् ॥ ३७ ॥ यथा सोम्यैकेन मृत्पिण्डेन सर्वंमृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयंमृत्तिकेत्येव सत्यम् [ छां० ॥ ६ ॥ ॥ १ ॥ ४ ॥ ] इत्यादिषु दृष्टान्तवाक्येषु हि कार्यस्य घटादेः कारणभूतमृद्द्रव्याद्यभिन्नत्वमेव प्रतिपाद्यते ।

नतुकारणभूतमृद्द्रव्यादेःसत्यत्वं कार्यभूतघटादेरसत्यत्वंचेत्युभयम् । तथा सतीति शब्दानन्वयेन।मृत्तिकैव सत्यमित्यादेरितिशब्दाघटितस्यैव शब्दप्रयोगस्यावश्यकत्वात्।इतिशब्दसत्त्वे च घटादिकार्यस्य मृद्द्रव्याद्यभिन्नताया एव प्रतिपादनसम्भवाच्च ॥ ३८ ॥ अत्र हि मृत्तिकाशब्दार्थविशेष्यकसत्यपदार्थप्रकारकबोधः एवकारबलेन । घटादिविशेष्यकासत्यत्वप्रकारकबोधश्चभवदभिमतः ॥ ३९ ॥ सचनसम्भवति । इतिशब्देन तत्प्रतिरोधात् ॥ ४० ॥ इतिशब्दपूर्वनिपातितमृत्तिकाशब्दार्थस्येतिशब्दार्थे विशेषणतयान्वितस्यतदुत्तरनिपतितसत्यपदार्थविशेष्यतयाऽन्वयोह्यसम्भावितः ॥ ४१ ॥ अपितुप्रकरणबलादनुषक्तेनतत्प्रकरणस्थेनैव सर्वंमृन्मयमित्यनेन सम्मिलितात् । मृत्तिकेत्येवसत्यमित्येतद्वाक्यात् मृन्मयपदार्थघटादिविशेष्यको मृद्द्रव्याभिन्नत्वप्रकारकप्रमाणजन्योपलब्धिविशेष्यत्वप्रकारकः । एवकार बलान्मृद्द्रव्याभिन्नत्वप्रकारकप्रमाणजन्योपलब्धिविशेष्यत्वाभावप्रकारकश्चबोधः । सर्वंमृद्द्रव्यविकृतिभूतं घटादिकार्यजातंकारणभूतमृद्द्रव्याभिन्नमेव नतु द्रव्यान्तरमित्यस्मिन्नर्थे पर्यवसन्न एव जायते । यथा शङ्खः पाण्डर इत्येव सम्प्रतिपन्न इत्यादौ शङ्खविशेष्यकः पाण्डराभिन्नत्वप्रकारकप्रमाणजन्योपस्थितिविशेष्यत्वप्रकारकः । एवकारबलात्पाण्डराभिन्नत्वप्रकारकप्रमाणजन्योपस्थिति

विशेष्यत्वाभावप्रकारकश्च बोधः । शङ्खः पाण्डर एव नतु रूपान्तरवानित्यर्थेपर्यवसन्नः ॥ ४२ ॥ अतएव ॥ तदनन्यत्वमारम्भणशब्दादिभ्य इति सूत्रे जगतो ब्रह्मानन्यत्वं साध्यं प्रतिज्ञायारम्भणशब्दघटितवाक्यानां तत्साधकत्वे न सूत्रकृतोदाहरणं साधु सङ्गच्छते ॥ ४३ ॥ तथाच ॥ यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयम्मृत्तिकेत्येव सत्यमिति दृष्टान्तवाक्यस्य विवरणमित्थं बोद्धव्यम् । हेसोम्यायथैकेन मृत्पिण्डेन कारणभूतेनविज्ञातेनकार्यभूतं सर्वम्मृन्मयं घटादिवस्तुजातं । विज्ञातं स्यात् । तथा येन ब्रह्मणाश्रुतेनाश्रुतं श्रुतं भवतीति पूर्वेणान्वयः । कथमन्येन विज्ञातेनान्यद्विज्ञातं भवतीत्याशङ्कायामाह । वाचारम्भणमित्यादि । मृत्पिण्डेनेत्यनुषज्यते । विकारः । घटत्वशरावत्वादिसंस्थानविशेषः । नामधेयं घटशरावादिसञ्ज्ञाचेत्युभयम् । मृत्पिण्डेन । आरम्भणम् । आरभ्यते । आलभ्यते । स्पृश्यत इत्यारम्भणम् । प्राप्तंभवतीत्यर्थः । कृत्यल्युटो बहुलम् । [ ॥ ३ ॥ ३ ॥ ११३ ॥ ] इत्यनुशासनेन कर्मणि ल्युट् । किमर्थमित्यत्राह । वाचेति। वाचा । उदकाहरणादिव्यवहारोपयोगितत्तदसाधारणव्यावर्तकतत्तद्वस्तुनिर्देशलक्षणवागर्थम् । तादृशवस्तुनिर्देशपूर्वकतादृशव्यवहारसिध्यर्थमित्यर्थः । हेतौ

प्रमाणजन्योपलब्धिविषयत्वव्यवच्छेदबोधश्च भवतीति ॥ ४४ ॥ एवमेव तत्प्रकरणस्थदृष्टान्तवाक्यान्तराणामपि बोधोऽनुसन्धेयः ॥ ४५ ॥ विस्तरस्तु भाष्याद्याकरग्रन्थेऽवसेयः ॥ ४६ ॥ एवम् ॥ यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा [ छां० ॥ ७ २४ ॥ १ ॥ ] यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् [ ॥ बृ०॥ ६ ॥ ५ ॥ १५ ॥ ] मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन । मृत्योस्समृत्युमाप्नोति य इह नानेव पश्यति [ ॥ बृ ॥ ६ ॥ ४ ॥ १९ ॥ ] इत्येवमाद्या एतदधिकरणविषयवाक्यतयाऽभिमतायाश्श्रुती द्वैतनिषेधेन प्रपञ्चमिथ्यात्वग्राहकप्रमाणतया प्रागुक्तावस्थाद्वयग्राहकप्रमाणतया च त्वद्भाष्यकार उदाहरति ॥ ४७ ॥ तास्सर्वा जगद्ब्रह्मणोर पृथक्सिद्धविशेषणविशेष्यभावलक्षणसम्बन्धेन सम्बद्धतयैकवस्तुभावापन्नयोस्तथाविधसम्बन्धनिबन्धनैकत्वाज्ञानमूलतत्प्रातिकोटिभूतद्वैतबुद्धिप्रतिषेधपरास्तथाविधैकत्वज्ञानाज्ञानलक्षणदशाद्वयपराश्च ॥ ४८ ॥ न चेदृशद्वैतनिषेधः प्रपञ्चमिथ्यात्वग्राहको भवति ॥ ४९ ॥ नापि चेदृशदशाद्वयं भवदभिमतदशाद्वयं भवति ॥५०॥ यतस्सर्वमिदं प्रपञ्चस्य पारमार्थिकस्यैव सतो ब्रह्मणा सह सम्बन्धविशेषनिबन्धनैकत्वग्राहणमात्रपर्यवसायि॥५१॥ यथा ह्यार्द्रे मृत्पिण्डे परस्परासंयोगेन पृथगवस्थिते

द्वित्वेन व्यवह्रियेते । परस्परसंयुक्तेचैकत्वेन च ।न च तत्रैकम्मिथ्या भवति ॥ ५२ ॥ तथेहापि जगद्ब्रह्मणो रपृथक्सिद्धविशेषणविशेष्यभावलक्षणसम्बन्धविशेषा परिज्ञानदशायां पृथगिवावभासमानयोर्वेदान्तश्रवणेन तादृशसम्बन्धविशेषज्ञाने सत्येकत्वेन ग्रहणं भवति ॥ ५३ ॥ न च तत्रैकांशे । मिथ्या भवितुमर्हति॥५४॥ इयांस्तु विशेषः । मृत्पिण्डयोस्सम्बन्धसम्पत्त्यसम्पत्त्य धीनतज्ज्ञानाज्ञानाभ्यामेकत्वद्वित्वबुद्धी भवतः।जगद्ब्र-ह्मणोस्तु सत्यपि सदातनेतादृशसम्बन्धे तस्यातीन्द्रि-यतया वेदान्तश्रवणतदभावाधीनतज्ज्ञानाज्ञानाभ्यामे-कत्वद्वित्वबुद्धी भवत इति ॥ ५५ ॥ एवं ब्रह्मण एक-स्यैव सद्भावव्यपदेशा अपि जगतो ब्रह्मणः पृथग्वस्तु त्वव्यवहारानर्हसम्बन्धविशेषवत्तया तदन्तर्भूतत्वनिब-न्धना एव । न पुनर्जगन्मिथ्यात्वनिबन्धनाः ॥ ५६ ॥ अत एव ॥ सर्वं खल्विदं ब्रह्म तज्जलान्[ छां० ॥ ३ ॥ ॥ १४ ॥ १ ॥ ] विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति [ तै० ॥ ६ ॥ ११ ॥ २ ॥ ] सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः [ छां०॥६॥८॥ ६ ॥ ] एतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेत केतो [ छां० ॥ ६ ॥ ८॥७॥ ]सोऽकामयत । बहुस्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इद ँ सर्वमसृजत । यदिदं किञ्च । तत्सृष्ट्वा । तदेवानुप्रावि-

शत् । तदनु प्रविश्य । सच्चत्यच्चाभवत् [ तै०॥ २ ॥ ॥ ६ ॥ ] येन सर्वमिदं प्रोतं पृथिवीचान्तरिक्षं च द्यौश्च दिशश्चावान्तरदिशाश्च स वै सर्वमिदं जगत् स च भूतं स च भव्यम् [ ॥ तै०॥ ना० ॥ ६ ॥ ५० ॥ १३ ॥ ] इत्याद्याश्श्रुतयो जगद्ब्रह्मणोरैक्यं व्यपदिश्य तथा विधैक्यव्यपदेशस्यापृथक्सिद्धविशेषणविशेष्यभावलक्षणं सम्बन्धविशेषमेव निबन्धनं स्फुटमेवोपदिशन्ति ॥ ५७ ॥ अत्र हि प्रपञ्चमिदमादिशब्दैर्गृहीत्वैव तस्य ब्रह्मणा सहैक्यं निर्दिश्य । तज्जलान् ॥ तद्विश्वमुपजीवति ॥ सन्मूलाः ॥ ऐतदात्म्यमिदं सर्वम् ॥ तदेवानुप्राविशत् ॥ येन सर्वमिदं प्रोतम् ॥ इत्यादिभिर्निर्देशैस्तत्रतत्रैवैकत्वव्यपदेशहेतुस्सम्बन्धविशेष इति स्पष्टीकृतम् ॥ ५८ ॥ प्रपञ्चस्य मिथ्यात्वे तु । ब्रह्म सत्यमन्यन्मिथ्येत्येव निर्देष्टव्यम् । न तु जगद्ब्रह्मणोरेकत्वं निर्दिश्य तादृशनिर्देशनिर्वाहकतया सम्बन्ध विशेष उपपादनीयः ॥ ५९ ॥ तदिदमुक्तं स्पष्टमेव गीतायामपि । सर्वं समाप्नोषि ततोऽसि सर्वः [ ॥ गी०॥ ॥ ११ ॥ ४० ॥ ] इति भगवद्दत्तदिव्यचक्षुषा सम्बन्ध विशेषं साक्षात्कुर्वता पार्थेन ॥ ६० ॥ तत्रैव ॥ असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ॥ [ ॥ गी० ॥ १६ ॥ ॥ ८ ॥ ]इति जगतोऽसत्यत्ववादमासुरप्रकृतिजनवादमाचक्षाणेन भगवता वासुदेवेनापि तादृशवादस्या-

सत्तायां वैषम्यस्य दुर्वचत्वाच्च ॥ ६७ ॥ तथाहि । शुक्तिं दृष्ट्वा इदं रजतमिति केनचित्प्रयुक्तं वाक्यं ह्यप्रमाणमिति सर्वसम्मतम् ॥ ६८ ॥ तस्यापि च नेदानीमप्रमाणत्वसिद्धिः।तत्रापिभवद्भिः प्रातिभासिकपदार्थसद्भावतद्भानयोरङ्गीकारेण तद्वति तत्प्रकारकधीजनकत्वरूपप्रामाण्यस्यानपायात्।अन्यथाख्यात्यनङ्गीकारेण शुक्तौरजतत्वभानाभावेन तदभाववति तत्प्रकारकधीजनकत्वरूपाप्रामाण्याप्रसक्तेश्च ॥ ६९ ॥ पारमार्थिकपदार्थधीलक्षणप्रमाजनकत्वमेव प्रमाणत्वम् । मिथ्यापदार्थधीलक्षणाप्रमाजनकत्वमेवाप्रमाणत्वम् । स्वप्नावस्थायां तात्त्विकतयैव प्रतीयमानानां स्वाप्निकपदार्थानां तदानीं पारमार्थिकतावद्व्यावहारिकपदार्थानामपि व्यवहारावस्थायां पारमार्थिकताया इष्टत्वात्प्रातिभासिकपदार्थानां कदापि पारमार्थिकत्वानङ्गीकारेण मिथ्यात्वस्यैवेष्टत्वाच्च रजतं दृष्ट्वा प्रयुक्तस्येदं रजतमिति वाक्यस्य प्रमाणतायाः । शुक्तिं दृष्ट्वा प्रयुक्तस्येदं रजतमिति वाक्यस्याप्रमाणतायाश्च निर्वाहः । इत्थमेव च लौकिकपदार्थविषयवेदस्यापि प्रमाणत्वं सम्भवत्येवेति चेन्न।भवदभिमतपारमार्थिकत्वमिथ्यात्वयोर्दुर्वचत्वात् ॥ ७० ॥ न च बाधितत्वमेव मिथ्यात्वम् । अबाधितत्वमेव च पारमार्थिकत्वम्। प्रातिभासिकरजतादिपदार्थानामुत्तरकाले बाधनिश्च-

यसम्भवान्मिथ्यात्वम् । सत्यरजतादीनां परमार्थावस्थायां बाधसम्भवेपि व्यवहारावस्थायां बाधनिश्चयासम्भवेन तावत्पर्यन्तमबाधितत्वलक्षणं पारमार्थिकत्वं सम्भवत्येव । अतस्सर्वोपि लौकिको भ्रमप्रमाव्यवहारः प्रमाणाप्रमाणव्यवहारश्च निर्वहत्येवेति वाच्यम् । वह्नावनुष्णत्वं बाधितम् । जले चोष्णत्वं बाधितमित्यादिव्यवहारेण । यस्य धर्मस्य यस्मिन् धर्मिणि व्यतिरेकनिश्चयो भवति । तत्र तस्य धर्मस्य बाधितत्वव्यवहारदर्शनात् । स्वनिरूपितकिञ्चिद्धर्मिनिष्ठविशेष्यतानिरूपितप्रकारताशाल्यभावप्रतियोगित्वसम्बन्धेन निश्चयविशिष्टत्वस्यैव सामान्यतो बाधितत्वरूपतया सर्वस्यापि पदार्थस्य क्वचित्केनचित्सम्बन्धेन सत्तायाः क्वचिदसत्तायाश्च प्रामाणिकत्वेनेदृशबाधितत्वस्य सर्वसाधारणतया तदभावस्य क्वाप्यसम्भवात् ॥७१॥ यदि च तद्धर्मिणि प्रतीतस्य धर्मस्य तत्रैवव्यतिरेकनिश्चये सत्येवमिथ्यात्वव्यवहारदर्शनात्तादृशधर्मिणि तादृशधर्मस्यबाधितत्वमेव मिथ्यात्वम् । तच्च स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितस्वावच्छेदकसम्बन्धावच्छिन्नस्वावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपकत्वसम्बन्धेन निश्चयवृत्तिप्रकारत्वपर्यवसितं न सर्वसाधारणमित्युच्यते ॥ ७२ ॥ तदापि तत्त्वज्ञतादशायां ब्रह्माणि प्रप-

त्वबाधनिश्चयस्य पूर्वं प्रपञ्चप्रतीतेश्च भवद्भिरङ्गीकारेण ब्रह्मेतरसर्वसाधारणमेवेदमपीति न व्यावहारिकपदार्थेषु तदभावः क्वचित्प्रसिध्यति ॥ ७३ ॥ न च स्ववृत्तिनिश्चयवृत्तित्वसम्बन्धावच्छिन्नस्वानिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन किञ्चित्कालविशिष्टप्रकारतावत्त्वरूपमेवाबाधितत्वमिह पारमार्थिकत्वरूपं तच्छून्यत्वरूपं बाधितत्वमेवेह मिथ्यात्वरूपमभिमतम् । निश्चयवृत्तित्वं चेहापि पूर्ववदेव । इत्थं च व्यवहारावस्थाकालमादाय व्यावहारिकपदार्थानां स्वप्नावस्थाकालमादाय स्वाप्निकपदार्थानां च पारमार्थिकत्वं सूपपादम् । तच्छून्यत्वरूपबाधितत्वलक्षण मिथ्यात्वं च प्रातिभासिकपदार्थानां शुक्तिरूप्यादीनां सम्भवति । व्यवहारावस्थाकाल एव तेषां प्रतीतिबाधयोस्सत्त्वादिति वाच्यम् । कस्यचिद्व्यवहारावस्थाकाले कस्यचित्तत्त्वज्ञतावस्थाया अपि सम्भवेन कृत्स्नस्य प्रपञ्चस्य तदीयबाधानिश्चयविषयत्वेन निरुक्तपारमार्थिकताया लोकसिद्धपदार्थेषु कस्याप्यसम्भवात् । प्रतियोग्यप्रसिद्ध्यैव तच्छून्यत्वलक्षणमिथ्यात्वस्यापि क्वचिद्दुरुपपादत्वाच्च ॥ ७४ ॥ न च किञ्चित्कालावच्छिन्नकिञ्चित्पुरुषविशिष्टप्रकारतावत्त्वमेव पारमार्थिकत्वम् । पुरुषविशिष्टत्वं प्रकारतायां स्ववृत्तीत्यादिपूर्वोक्तसम्बन्धेन । तच्छून्यत्वमेव च

कत्वस्य सर्वपदार्थसाधारणतया मिथ्यापदार्थस्यैवाप्रसिद्ध्या क्वचिदपि ज्ञाने मिथ्यापदार्थधीत्वलक्षणभ्रमत्वस्य क्वचिदपि वाक्ये तादृशपदार्थधीजनकत्वलक्षणाप्रमाणत्वस्य च दुरुपपादत्वात् ॥ ७८ ॥ अथ व्यवहारावस्थायामेव सत्यमिथ्याभ्रमप्रमाप्रमाणाप्रमाणव्यवहारविभागसत्त्वात्तान्निर्वाहाय व्यवहारावस्थाघटितमेव तेषां लक्षणं वक्तुमुचितम्। व्यवहारावस्था नाम तत्त्वज्ञानाभाव एव। तथा च। तत्त्वज्ञानाभावविशिष्ट पुरुषविशिष्टप्रकारतावत्त्वमेव पारमार्थिकत्वम्। तच्छून्यत्वमेव मिथ्यात्वम्। पुरुषविशिष्टत्वं च प्रकारतायां स्ववृत्तीत्यादिप्रागुक्तसम्बन्धेनैव। इत्थं च शुक्तिरूप्यादिप्रातिभासिकपदार्थानांभ्रान्तस्य भ्रान्तिकाले बाधनिश्चयाभावेपि तदुत्तरकाले बाधनिश्चयजननात्तत्कालेप्य भ्रान्तानां बाधनिश्चयजननाच्च तद्गोचरतया तेषां मिथ्यात्वसिद्धेर्निष्प्रत्यूहतया दर्शितसकलव्यवहारोपपत्तिरिति चेन्न। व्यवहारावस्थापन्नानामेव पुरुषाणाम्। यतो वा इमानि भूतानि जायन्त इत्यादिवाक्यैर्ब्रह्मणि विकारित्वकारणत्वादिनिश्चयस्य। निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनमित्यादिभिर्विकारित्वकारणत्वादिप्रतिषेधकतया भवदभिमतैर्वाक्यैर्ब्रह्मणि विकारित्वकारणत्वादिव्यतिरेकनिश्चयस्य च जननात्तयोर्निश्चययोः परस्परबाधनिश्चयरूपत्वाच्च ब्रह्मणि प्रतीतानां-

विकारित्वतद्व्यतिरेकादीनाम्मिथ्यात्वसिद्ध्या दर्शितोभयविधवाक्यानामप्रामाण्यसिद्धेर्वेदाप्रामाण्यादिप्रसङ्गस्य वज्रलेपायितत्वात् । भवत्सिद्धान्तसिद्धस्य जगन्मिथ्यात्वव्यवहारस्यापि जगतोबाधनिश्चयरहितेषु व्यवहारावस्थापन्नेष्वेव दर्शनेन तदनिर्वाहात् । माध्यमिकादिनास्तिकेषु ब्रह्मणोपि बाधनिश्चयदर्शनेन तस्यापि पारमार्थिकत्वासिद्धेश्च ॥ ७९ ॥ वस्तुतस्तु सब्रह्मके प्रपञ्चे माध्यमिकानाम्मिथ्यात्वस्य सम्मततया तेषु तद्बाधनिश्चयस्यावश्यकतया क्वापि पारमार्थिकत्वव्यवहारस्य गतिरेव नास्ति ॥ ८० ॥ न चोक्तपरिष्कारे निश्चये भ्रमभिन्नत्वनिवेशान्नोक्तदोषः । तदीय बाधनिश्चयस्य भ्रमत्वादिति वाच्यम् । तथा सतिमिथ्यात्वभ्रमत्वयोरन्योन्यघटितत्वेनात्माश्रयान्योन्याश्रयप्रसङ्गात्तत्स्वरूपदुर्निरूपत्वस्यैव सिद्धेः ॥ ॥ ८१ ॥ अथ स्वाश्रयकालावच्छिन्नस्वाश्रयपुरुषवृत्तिनिश्चयवृत्तित्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन द्वित्वविशिष्टप्रकारतावत्त्वमेव पारमार्थिकत्वम् । तादृशनिश्चयवृत्तित्वसम्बधेन द्वित्वविशिष्टप्रकारतावत्त्वमेव च मिथ्यात्वम् । निश्चयवृत्तित्वं प्रागुक्तसम्बन्धेनैव । इष्यते च तत्तत्कालावच्छिन्नतत्तत्पुरुषापेक्षया यथायथं तत्रतत्र पारमार्थिकत्वमिथ्यात्वव्यवहारः । इत्थञ्च स्वाप्निकपदार्थानां

पुरुषस्य स्वप्नावस्थापेक्षया पारमार्थिकत्वव्यवहारः । जागरावस्थापेक्षया मिथ्यात्वव्यवहारः । प्रातिभासिकपदार्थानां भ्रान्त्यवस्थापेक्षया पारमार्थिकत्वव्यवहारः। तन्निवृत्तिदशापेक्षया मिथ्यात्वव्यवहारः । व्यावहारिकपदार्थानांव्यवहारावस्थापेक्षया पारमार्थिकत्वव्यवहारः परमार्थावस्थापेक्षया मिथ्यात्वव्यवहारश्चेत्येतत्सर्वमुपपद्यते । अतश्च ब्रह्मणो विकारित्वकारणत्वादिप्रतिपादकवाक्यानां तत्प्रतिषेधकवाक्यानां च प्रामाण्यमुपपद्यते । विकारित्वकारणत्वादीनां व्यवहारावस्थाकालतदवस्थापन्नपुरुषवृत्तित्वमादाय निर्विकारत्वादीनां परमार्थावस्थाकालतदवस्थापन्नपुरुषवृत्तित्वमादाय च पारमार्थिकत्वोपपादनसम्भवात् । तस्मान्न काचिदप्यनुपपत्तिरिति चेन्न । एवं सति सर्वेषां पदार्थानां पारमार्थिकत्वमिथ्यात्वयोःसर्वासां धियां प्रमत्वभ्रमत्वयोस्सर्वेषां भ्रान्ताभ्रान्तवाक्यानां प्रमाणत्वाप्रमाणत्वयोश्च द्वयोरविशेषेण प्रसक्त्या सर्वलोकव्यवहारविप्लवप्रसङ्गात् ॥ ८२ ॥ एतेषां धर्माणां परस्परविरुद्धत्वेन सर्वसम्प्रतिपन्नानामेकत्र सम्भवं नहि कश्चिदभ्युपैति प्रामाणिकः ॥ ८३ ॥ न च ब्रह्मणः पारमार्थिकत्वं मिथ्यात्वं चोभयं भवतो वा सम्मतम् ॥ ८४ ॥ विलीयेत चैवं सति प्रतियोग्यभावबुद्ध्योर्बाध्यबाधकभावोऽपि । तत्प्रयोजकविरोधस्यैव मूलतोपलापात्

॥ ८५ ॥ न चैतत्त्वद्भाष्यकारोपि वा सम्मन्यते ॥ ८६ ॥ यत एवमाहारम्भणाधिकरणभाष्ये सः । नह्येकस्य ब्रह्मणः परिणामधर्मवत्त्वं तद्रहितत्वं च शक्यं प्रतिपत्तुमिति ॥ ८७ ॥ अथ अस्यां दशायाममुकं प्रतीदं पारमार्थिकमिदंमिथ्येति कालभेदेन पुरुषभेदेन च व्यवस्थिते पारमार्थिकत्वामिथ्यात्वे । एकस्यां दशायामेकं प्रति तयोरेकत्राप्रतीतेर्विरोधोप्युपपद्यत इत्येवास्मद्भाष्यकाराशयः । यत एवमाह स आरम्भणाधिकरणभाष्ये । प्राग्ब्रह्मात्मताप्रबोधादुपपन्नस्सर्वो लौकिको वैदिकश्च व्यवहारः । यथा सुप्तस्य प्राकृतस्य जनस्य स्वप्न उच्चावचान् भावान् पश्यतो निश्चितमेव प्रत्यक्षाभिमतं ज्ञानं भवति प्राक् प्रबोधात् । न च प्रत्यक्षाभासाभिप्रायस्तत्काले भवति । तद्वदितीति चेत् ॥ ८८॥ सत्यमुक्तम् ॥ ८९ ॥ दुरुक्तं तु तत्।पारमार्थिकत्वामिथ्यात्वयोः प्रमात्वभ्रमत्वयोश्च पुरुषविशेषकालविशेषप्रतिनियतत्वस्य लोकव्यवहार विरुद्धत्वात् ॥ ९० ॥ इदमत्रावधेयम् । यन्मिथ्या यच्चपारमार्थिकम् । ते सर्वस्य सर्वदैव तथाभूते लोकसिद्धे । नहि शुक्तौ रजतत्वम् । शशे वा शृङ्गं कदाचित्कस्यचिन्मिथ्या भवति । नापि वा रजते रजतत्वम् । हरिणे वा शृङ्गं कदाचित्कस्यचित्तथ्यं भवति । मिथ्यत्वतथ्यत्वयोः कालविशेषपुरुषविशेषपरिच्छिन्नत्वानु-

नलम्भात्। न खलूपलभमानोपि पुरुषः। इदमिदानीम्मम तथ्यम्मिथ्येति तथ्यत्वमिथ्यात्वे पुरुषविशेषकालविशेषपरिच्छिन्ने उपलभते। अपि त्वनवच्छिन्ने एव। एवम्। रजतं पश्यतो जायमाने। इदं रजतमिति ज्ञाने। प्रमेत्येव। शुक्तिं पश्यतो जायमाने। इदं रजतमिति ज्ञाने। भ्रम इत्येव च सर्वलोकव्यवहारः। लोकव्यवहारानुरोधेन च निर्वचनं कार्यम्। न तु स्वोत्प्रेक्षासिद्धसङ्केतमात्रानुरोधेन। लोकव्यवहाराननुरोधे निर्वचनस्यैवानावश्यकत्वात्। नचेदं निर्वचनं लोकव्यवहारानुरोधि। अपि चैवं सति ब्रह्मणस्सविशेषत्वनिर्विशेषत्वपरयोर्वेदभागयोरपि पुरुषविशेषकालविशेषभेदेन प्रमाणतायामप्रमाणतायां चाविशिष्टायां तत्र प्रथमस्याताात्त्विकं प्रामाण्यं द्वितीयस्य तु तात्त्विकं प्रामाण्यमिति भवदीयाभिमानोप्यविवेकमूल एवेति सिद्धं भवति। किं बहुना। इत्थं प्रामाण्याप्रामाण्ययोः कालविशेषपुरुषविशेषप्रतिनियततां प्रतिपादयन् भवदीयभाष्यकारो वेदान् जैनबौद्धादिग्रन्थेभ्यो निर्विशेषी कुर्वन् सम्यग्ररक्षेति विशेषतो बहुमन्तव्यो भवति वैदिकानामिति विद्वांसो विहसन्ति। वैदिकान् प्रति वेदानां जैनबौद्धादीन् प्रति तद्ग्रन्थानां च प्रमाणता। जैनबौद्धादीन् प्रति वेदानाम्। वैदिकान् प्रति जैनबौद्धादिग्रन्थानां चाप्रमाणता च निर्विशेषैव हीदानीं

सिद्धा भवतीति ॥ ९१॥ तस्माद्भवत्कल्पितावस्थाद्व-
येन नैते व्यवहाराः कथंचिदपि निवहन्ति ॥ ९२ ॥
अपि तु परमार्थतो वस्तूनां सद्भावासद्भावनिबन्धना
एवैते व्यवहारा इत्येव वक्तव्यम् ॥९३॥एवमङ्गीकारे च
योब्रह्मणोविकारित्वकारणत्वादिप्रतिपादकवेदवाक्यग-
णः यश्च तत्प्रतिषेधकतया भवदभिमतो वेदवाक्यगणः
तयोरन्यतरस्याप्रमाणताया दुर्वारतया तत्स्वीकारनि
बन्धनः प्रागुक्तः कृत्स्नोपि प्रसङ्गो दुर्वार एवावतिष्ठते
त्वन्मत इति ॥ १२६ ॥ किञ्च शुक्तौ रजतभ्रमाधिष्ठा-
नत्वमिव ब्रह्मणि जगद्भ्रमाधिष्ठानत्वमेव हि त्वया स्वी-
क्रियते । तत्र च सदसदनिर्वचनीयपदार्थोत्पत्तिं स्वी-
करोषि । स च पदार्थो मायाकार्यभूतो मिथ्याभूतश्च
त्वदभिमतः । न च मिथ्याभूतजगदुपादानकारणत्वं
ब्रह्मणस्सम्भवितुमर्हति । सत्यमिथ्यापदार्थयोरभेदा-
सम्भवात् । अभेदासम्भवे चोपादानोपादेयभाव एव न
सम्भवतीति प्रस्फुट एव त्वन्मते ब्रह्मणो जगदुपादान-
कारणत्वासम्भवः॥ १२७ ॥ सूत्रकारेण च । प्रकृतिश्च
प्रतिज्ञादृष्टान्तानुपरोधात् [ शा ॥ १ ॥ ४॥२३ ॥ ]
तदनन्यत्वमारम्भणशब्दादिभ्यः [ शा ॥२॥ १ ॥१९॥]
इत्यादिषु सूत्रेषु मृद्द्रव्यघटादिपदार्थावनन्यभावापन्ना-
वेवोपादानोपादेयभावापन्नौ दृष्टान्तीकृत्य जगद्ब्रह्मणो-
रप्यभिन्नतामुपादानोपादेयभावं च प्रतिपादयन्ति

श्रुतिवाक्यान्युदाहृत्यैव ब्रह्मणो जगदुपादानकारणत्वं निर्धारितम् ॥ १२८ ॥ न चेदं त्वन्मते कथंचिदपि सम्भवति । मिथ्याभूतमायाकार्यजगदभिन्नतायास्सत्ये ब्रह्मणि सर्वथैवासम्भवात् ॥ १२९ ॥ न च भ्रमाधिष्ठानत्वमेवोपादानकारणत्वमिति सुवचम् । कारणत्वव्यवहारस्य भ्रमाधिष्ठानमात्रे क्वापि लोकासिद्धत्वात् अनन्यथासिद्धनियतपूर्वभाविष्वेव तस्य लोकसिद्धत्वाच्च ॥ १३० ॥ अथास्तु मायानिष्ठजगदुपादानकारणत्वस्यैव ब्रह्मण्यध्यासः जपाकुसुमलौहित्यस्येव स्फटिके । तमाश्रित्यैव च ब्रह्मणि जगत्कारणत्वं प्रतिपादयति वेद इति चेत् । तर्हि लोहितःस्फटिक इत्यादिभ्रान्तवाक्यस्येव वेदस्यापि वज्रलेपायितमेवाप्रामाण्यमिति प्रच्छन्नबौद्धेन सता त्वया साधु संरक्षिता वेदाः ॥ १३१ ॥ अथ वेदेपि कर्मकाण्डे पूर्वापरापच्छेदे पूर्वोत्तरशास्त्रयोर्विरोधे पूर्वशास्त्रस्य परशास्त्रेण बाधाप्रामाण्यवद्वेदान्तेष्वपि सविशेषब्रह्मपरशास्त्रस्य निर्विशेषब्रह्मपरशास्त्रेण बाधाप्रामाण्ययोस्स्वीकारे का नः क्षतिरिति चेन्न। प्रच्छन्नबौद्धतापत्तिमपि क्षतिममन्वानं त्वां विना केनापि वैदिकेन कस्यापि वेदभागस्य तयोरनङ्गीकारात् ।पूर्वापरापच्छेदस्थलेपि तदङ्गीकाराभावस्य प्रागेव सविस्तरं निरूपितत्वाच्च ॥ १३२ ॥ तस्मात् परमार्थतः पदार्थसद्भावस्वीकारमन्तरेण प्रामा-

ण्यानिर्वाहेण ब्रह्मणो विकारित्वकारणत्वादिप्रतिपादक वेदप्रामाण्यनिर्वाहाय परमार्थतस्तस्य तत्स्वीकारे कौटस्थ्यभङ्गः । कौटस्थ्यप्रतिपादकतया भवदभिमतवेदप्रामाण्यभङ्गश्च । तत्परिहाराय कौटस्थ्यस्वीकारे कारणत्वभङ्गः । तत्प्रतिपादकवेदप्रामाण्यभङ्गश्च । एवं जगतो मिथ्यात्वस्वीकारे कारणत्वभङ्गः । कार्याभावे कारणत्वासिद्धेः । जगतस्सत्यत्वमाश्रित्य ब्रह्मणस्तत्कारणत्वनिर्वाहे द्वैतप्रसङ्गः । इति परस्परविरोधनिबन्धनो व्याघातः परस्परविरुद्धान् । ब्रह्मणो जगत्कारणत्वं कौटस्थ्यं जगतो मिथ्यात्वेन ब्रह्मणोऽद्वितीयत्वं चेत्येतानर्थान् प्रतिपादयतस्त्वदीयभाष्यकृत एव मस्तके दुर्वारो निपततीति सिद्धं भवति ॥ १२३ ॥ एतेन । प्रथमविरोधप्रदर्शनान्ते । विरोधो बलवानेष ज त्कारणताश्रितः । अनेन परमेशानजगत्कारणता क्षता । छिन्नमूलद्रुमन्यायात्सकलं दर्शनं क्षतम् । विरोधं चेममुद्धर्तुमवधिर्ब्रह्मणो वय इति श्लोकद्वयमात्मश्राद्धवदात्मन एवोपयोगार्थमस्माकं परिश्रमलेशप्रसङ्गमपि परिहरता त्वयैव प्रागेव निबद्धमिति सिद्धं भवति ॥ १२४ ॥ अथ पारमार्थिकमेव जगदुपादानत्वं ब्रह्मणि स्वीकुर्वाद्भिर्भवद्भिर्ब्रह्मणस्स्थूलचिदचिद्वैशिष्टयरूपेण कार्यतायास्सूक्ष्मचिदचिद्वैशिष्टयरूपेण कारणतायाश्च स्वीकारे ब्रह्मणः कार्यत्वकारणत्वोभयप्रतिषे-

धिकायाः । न तस्य कार्यं करणं च विद्यते [ श्वे ॥ ६ ॥ ८ ॥ ] इति श्वेताश्वतरोपनिषच्छ्रुतिः कथमुपपद्यते । एषा हि श्रुतिः । ब्रह्मणः कार्यनिषेधेन कारणतां कारणनिषेधेन कार्यतां च प्रतिषेधतीति चेदत्र ब्रूमः । मन्दमते नैषा श्रुतिर्ब्रह्मणः कारणत्वं कार्यत्वं वा प्रतिषेधति ॥ १॥ अपितु । यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते॥ नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन । न चास्य सर्वभूतेषु कश्चिदस्ति व्यपाश्रयः ॥ [ गी ॥ ३ ॥ १७॥ ॥ १८ ॥ ] इति गीतोक्तिर्यथाऽऽत्मतृप्तस्याप्तकामत्वेन साक्षादिष्टतया तदुपायतया वाऽभिमतः कर्मणा साधयितुमिष्टतमः कश्चिदर्थो नास्तीत्येतमर्थं प्रतिपादयति । तथैषापि । अवाप्तसमस्तकामस्य सर्वेश्वरस्य ब्रह्मणः स्वासाधारणं साधयितव्यं न किञ्चिदिष्टतमं विद्यते । नापि वा तदसाधारणकारणत्वेनाभिमतं किमपि साधकतममपेक्षणीयमस्तीत्येतमर्थमेव प्रतिपादयति ॥ २ ॥ अत्र कार्यमित्यस्मिन् शब्दे ण्यत्प्रत्ययस्य कर्मार्थकत्वात् । कर्तुः क्रिययाऽऽप्तुमिष्टतमस्यैव कर्मशब्दार्थतायाः । कर्तुरीप्सिततमं कर्म [ पा ॥१॥४॥४९ ॥ ] इत्यनुशासनसिद्धत्वाच्च कार्यशब्देन यथोक्तलक्षण एव ह्यर्थोऽभिधीयते ॥ ३ ॥ करणं न विद्यत इत्यस्य चायं भावः ॥ सोऽकामयत बहु-

स्यां प्रजायेयेति [ तै ॥ २ ॥ ६ ॥ २ ॥ ] इच्छामात्रं प्रभोस्सृष्टिः [ मां ॥ २ ॥ १२ ॥ ] कामाच्च नानुमानापेक्षा [ ॥ शा ॥ १ ॥ १ ॥ १९ ॥ ] इत्यादिश्रुतिसूत्रैस्सर्वशक्तियुक्तस्य सर्वेश्वरस्य परार्थमपि वा कस्यचिदर्थविशेषस्य साधयितव्यत्वे । इच्छामात्रमन्तरेण किमपि साधकतमं नापेक्षितमस्तीति ॥ ४ ॥ अयमर्थः विकरणत्वान्नेति चेत्तदुक्तम् [ ॥ शा २ ॥ १ ॥ ३१ ॥ ] इति सूत्र एव स्पष्टः ॥ ५ ॥ अस्याः श्रुतेरीदृशार्थकत्वमेव परस्य ब्रह्मणो वैभवातिशयप्रतिपादकतत्प्रकरणस्याप्युचितमवगम्यते ॥ ६ ॥ तथाहि ॥ तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम् । पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् ॥ न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च विद्यते ॥ परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च [ श्वे ॥ ६ ॥ ७ ॥ ८ ॥ ] इति श्वेताश्वतरोपनिषत्षष्ठाध्यायसप्तमाष्टमखण्डिकाद्वयं हि ब्रह्मणो वैभवातिशयप्रतिपादकप्रकरणस्थं दृश्यते ॥ ७ ॥ तत्र । न तस्य कार्यं करणं च विद्यत इत्यस्यास्मदुक्तार्थपरत्वेऽवाप्तसमस्तकामत्वं कस्यचिदपेक्षितस्य साधयितव्यत्वेपि कारणकलापलक्षणपरिकरमन्तरेण सङ्कल्पमात्रसाध्यसकलापेक्षितकार्यकत्वं चेत्येतद्विशेषणद्वयं वैभवातिशयरूपमेवोक्तं भवतीति

प्रकरणौचित्यं संभवति ॥ ८ ॥ त्वदुक्तरीत्या ब्रह्मणः कार्यत्वकारणत्वोभयप्रतिषेधपरत्वे ब्रह्मणः स्वतन्त्रतया परतन्त्रतया वा स्वस्य परस्य वा किञ्चिदप्यपेक्षितं प्रतिकारणत्वशक्त्य भावस्यैव सिद्धेरसमर्थस्य दरिद्रस्येव निर्गन्धकुसुमत्वापरपर्यायभूतमसामर्थ्यमकिञ्चनत्वं च वैभवातिशय भञ्जकमेव प्रतिपादितं भवति ॥ ९ ॥ एवं कारणत्व शक्त्यभावप्रतिपादनम् । परास्य शक्तिर्विविधैव श्रूयत इत्यादि समनन्तरवाक्येनसर्वशक्तिकत्वसर्वज्ञत्वादिप्रतिपादिनाविरुद्धं च ॥ १० ॥ अतस्त्वदुक्तार्थस्सर्वथैव प्रकरणप्रतिकूलः ॥ ११ ॥ न च भवदुक्तार्थोऽपि । विकरणत्वान्नेति चेत्तदुक्तमिति सूत्रश्रीभाष्यश्रुतप्रकाशिकाविरुद्धः । तत्र दर्शितश्रुतिघटककार्यकारणशब्दयोश्शरीरेन्द्रियपरताया एव विवक्षितत्वादिति वाच्यम् । पूर्वपक्षोत्थानबीजतया तावन्मात्रपरतायास्तत्र प्रथममभिमतत्वेऽपि सिद्धान्तेऽस्मदुक्तार्थपरताया एव तादृश श्रुतेस्तदभिमतत्वात् । तद्विवक्षितार्थस्याप्यंस्मदुक्तार्थैकदेशविशेषरूपत्वेन विरोधाभावाच्च ॥ १२ ॥ अपि च । इन्द्रियवाचककरणशब्दसहचारितकार्यशब्दस्य प्राकृतशरीरवाचकत्वं प्रकरणान्तरानुगुणं भवतीति प्राकृतशरीरेन्द्रियरहितत्वमेव वाऽत्र प्रतिपाद्यत इत्युपगन्तुं शक्यम् । हेयसुखदुःखहेतुप्राकृतशरीरेन्द्रिय-

रहितत्वस्यापि वैभवातिशयपर्यवसायित्वात् ॥ १३ ॥ दृश्यते हि गीतात्रयोदशाध्याये ॥ कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते [ गी ॥ १३ ॥ २० ॥ ] इति श्लोके कार्यकारणशब्दयोश्शरीरेन्द्रियवाचकतया प्रयोगः । ॥ १४ ॥ अत्रत्यकार्यकारणशब्दावस्मद्भाष्यकार युष्मद्भाष्यकाराभ्यामुभाभ्यामपिशरीरेन्द्रियपरावेव व्याख्यातौ ॥ १५ ॥ ईदृशगीताप्रयोगानुगुण्येनैव च युष्मद्भाष्यकारेण श्वेताश्वतरोपनिषद्भाष्ये ॥ न तस्य कार्यं करणं च विद्यत इत्यत्रापि कार्यकरणशब्दौ शरीरेन्द्रियपरावेव व्याख्यातौ ॥ १६ ॥ एवं स्थिते प्राचीनप्रौढग्रन्थकारव्याख्यानरीतिं प्रकरणानुगुणामन्यां वा कांचिद्व्याख्यानरीतिं विहाय स्वकपोलकल्पनया ब्रह्मणः कारणत्वाद्यभावप्रतिपादनपरं प्रकरण विरुद्धं त्वत्कृतव्याख्यानमतितुच्छमेवेति नैषा श्रुतिः कार्यकारणभावप्रतिषेधपरा भवितुमर्हतीति ॥ १३९ ॥

अथैवमपि ब्रह्मणो जगदुपादानकारणत्वं भवन्मते न सिध्यति । कार्याभिन्नकारणत्वस्योपादानकारणत्वरूपत्वात् । नित्यस्य ब्रह्मणः कार्यत्वासम्भवात् । जगतः कार्यत्वसम्भवेपि तस्य ब्रह्माभिन्नत्वाच्च ॥ १ ॥ न च परिनिष्पन्नस्यापि ब्रह्मणः कार्यत्वस्वीकार आवश्यक तदात्मानꣳस्वयमकुरुत [ ॥ तै ॥ २ ॥ ७ ॥ १ ॥ ] इत्यादिश्रुतिषु द्वितीयाश्रुतेः ॥ द्वितियायाः क्रियाज-

न्यफलशालित्वरूपकर्मत्वपर्यवसन्नकार्यत्वबोधकतायाः । कर्मणि द्वितीया [ व्या ॥२॥३ ॥ २ ॥ ] इत्यनुशासनसिद्धत्वात् । अन्यथा तद्बाधप्रसङ्गाच्च ॥ व्रीहीन् प्रोक्षतीत्यत्र द्वितीयाश्रुतिबलेन परिनिष्पन्नानामपि व्रीहीणां संस्कारविशेषवत्त्वेन प्रोक्षणक्रियाकर्मत्वलक्षण साध्यत्वस्वीकारवदिति वाच्यम् । उदाहृतश्रुतौ कर्मार्थकद्वितीयाश्रुतिबाधप्रसङ्गभिया ब्रह्मणो मुख्याया एव कार्यतायाःस्वीकारे ॥ सर्व एवात्मानो व्युच्चरन्ति [ बृ ॥ ४ ॥ १ ॥ २० ॥ एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति [ ॥ बृ ॥ ४ ॥ ४ ॥ १२ ॥ ] इत्यादिश्रुतौ कर्त्राख्यातश्रुतिबाधप्रसङ्गभियोत्पत्तिविनाशयोरपि मुख्ययोरेवात्मनां स्वीकारप्रसङ्गात् ॥ २ ॥ न चेष्टापत्तिः ॥ न जायते म्रियते वा [ ॥ क ॥ २ ॥१८॥] इत्यादिवेदान्तवाक्यविरोधात् ॥ स वा अयं पुरुषो जायमानश्शरीरमभिसम्पद्यमानः ॥ स उत्क्रामन्म्रियमाणः [ ॥ बृ ॥ ६ ॥ ३ ॥ ८ ॥ ] इतिश्रुत्यैवात्मनां जन्मविनाशयोरौपचारिकत्वप्रतिपादनेन तद्विरोधाच्च ॥ ३ ॥ यदिचैतद्विरोधपरिहाराय । व्युच्चरन्ति ॥ विनश्यतीत्यत्राख्यातश्रुतेरमुख्यत्वमिष्यते ॥ ४ ॥ तदा ब्रह्मणो जन्मादिसकलविकारप्रतिषेधकसर्ववेदान्तव्याकोपप्रसङ्गेनोदाहृतद्वितीयाश्रुतेरप्यमुख्यत्वमेवाश्रयणीयमिति कथं ब्रह्मणो मुख्यं कार्यत्वं सिध्यति ॥५॥

तस्माद्ब्रह्मण उपादानत्वं न भवन्मतेपि मुख्यं सम्भवतीति चेन्न नित्यत्वकार्यत्वोत्पत्तिविनाशादिस्वरूपानभिज्ञतामात्रनिबन्धनत्वादुक्तवाग्जालस्य ॥ १३६ ॥ इदमत्रावधेयम् ॥ इमास्तिस्रो देवता अनेन जीवेनात्मनाऽनु प्रविश्य नामरूपे व्याकरवाणि [ ॥ छां ॥६॥ ॥ ३ ॥ २ ॥ ] इत्यादिश्रुतावचिद्वस्तुजीवशरीरकेणात्मनानु प्रविश्य चिदचिद्विशिष्टस्य स्वस्यैव सङ्कल्पपूर्वकं नामरूपव्याकरणस्य परेण ब्रह्मणाकृतत्वश्रवणात्तत्तद्वस्त्राभरणादिविशेषणैश्शैलूषस्य श्रीकृष्णसत्यभामादिनामरूपव्यवहारवच्चिदचिद्वस्तुशरीरकत्वविशिष्टब्रह्मण एव जगद्गतकृत्स्नवस्तुनामरूपभाक्त्वेन कारणरूपत्वं कार्यजगद्रूपत्वं चेति कार्यकारणभूतयोर्जगद्ब्रह्मणोरभिन्नत्वमसकृदुपपादितमेव ॥ १ ॥ सत्कार्यवादस्यैव वेदान्तसिद्धतया प्रागेव सतः प्रधानस्य महत्त्वाद्यवस्थायोगमात्रेण पूर्वपूर्वावस्थापन्नस्य तस्य कारणताया उत्तरोत्तरावस्थापन्नस्य तस्य कार्यतायाश्च स्वीकारवत् ब्रह्मणोपि सूक्ष्मचिदचिद्वैशिष्ट्यलक्षणपूर्वावस्थापन्नस्य कारणतायास्स्थूलचिदचिद्वैशिष्ट्यलक्षणोत्तरावस्थापन्नस्य तस्य कार्यतायाश्च स्वीकारे नहि कश्चिद्विरोधः ॥ २ ॥ न च नित्यस्य ब्रह्मणः कार्यत्वासम्भवः । स्वरूपतस्सनातने कादाचित्कतत्तत्स्थूलचिदचिद्वैशिष्ट्यलक्षणावस्थायोगिनि ब्रह्मणि कालिकसम्बन्धावच्छिन्नाधेयतासम्बन्धावच्छिन्नस्वनिष्ठाव-

च्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन कालवि-
शिष्टान्यत्वरूपनित्यत्वस्यसर्वकालवृत्तित्वपर्यवसन्नस्य
करोतिक्रियाकर्मत्वरूपकार्यत्वस्य संप्रतिस्थूलचिद-
चिद्वैशिष्टचलक्षणावस्थावत्त्वपर्यवसन्नस्य च सत्त्वेन
द्वयोर्विरोधानुपलम्भात् ॥ ३ ॥ कृभ्वधात्वर्थक्रियाकर्म-
त्वमेव हि कार्यत्वम् ॥ ४ ॥ कर्मत्वं च क्रियाजन्यफल-
शालित्वम् ॥ ५ ॥ इत्थं च स्थूलचिदचिद्वैशिष्टचल-
लक्षणकादाचित्कावस्थाविशेषरूपफलाश्रयत्वरूपं
कार्यत्वं सनातनेपि ब्रह्मणि सम्भवत्येव ॥६॥ यथा च ।
कुलालो घटं करोतीति व्यवहारेण कार्यत्वं घटत्वाव-
स्थाश्रयद्रव्यस्य सनातनत्वेपि घटत्वावस्थायोगेन
सम्भवति । तथैव ॥ तदात्मानꣳस्वयमकुरुतेति श्रौत-
व्यवहारेण नित्यस्यापि ब्रह्मणः स्थूलचिदचिद्वैशिष्टच-
लक्षणावस्थाविशेषयोगेन कार्यत्वं सम्भवतीति न किं-
चिदवहीनम् ॥ ७ ॥ एवमेव च ॥ सूत्रकारेणापि ॥
आत्मकृतेः [ १ ॥ ४ ॥ २६ ॥ इति सूत्रेण कृभ्वधात्व-
र्थक्रियाकर्मत्वरूपकार्यत्वसम्भवम् । परिणामात् ॥
[ ॥ १ ॥ ४ ॥ २७ ॥ ] इति सूत्रेण कार्यत्वनिर्वाहौप-
यिकावस्थाविशेषं चोपपाद्यैव ब्रह्मण उपादानकारणत्वं
च स्थापितं प्रकृत्यधिकरणे ॥ ८ ॥ अत एव च श्री-

विष्णुपुराणेपि प्रथमांशे द्वितीयाध्याये ॥ स्रष्टा सृजति चात्मानं विष्णुः पाल्यं च पाति च । उपसंह्रियते चान्ते संहर्ता च स्वयं प्रभुः [ ॥ १ ॥ २ ॥ ६७ ॥ ] स एव सृज्यःस च सर्गकर्ता स एव पात्त्यत्ति च पाल्यते च । ब्रह्माद्यवस्थाभिरशेषमूर्तिर्विष्णुर्वरिष्ठो वरदो वरेण्यः [ ॥ १॥२॥७०॥] इति श्लोकयोः । आत्मानं सृजतीति सृज्य इति च॥सृजिक्रियाकर्मत्वरूपं कार्यत्वं सुस्पष्टमेव निर्दिश्यविष्णुशब्दवाच्यस्य ब्रह्मण उपादानकारणत्वमपि दर्शितश्रुतिसूत्रोक्तरीत्यैव निरूपितम् ॥ ९ ॥ सृजिरपिहिकरोति समानार्थकः प्रसिद्धः ॥१० ॥ न च प्रागभावप्रतियोगित्वमुत्पत्तिमत्त्वं वा कार्यत्वम् । तच्च न नित्यस्य ब्रह्मणः सम्भवति । तदेव च । घटो जायत इत्यादिव्यवहारेषु जनिधात्वर्थक्रियाकर्तृत्वरूपं प्रसिद्धमिति वाच्यम् । घटो भविष्यतीत्यादिव्यवहारबलात् मृद्द्रव्यस्य प्रागेव सत्त्वेपि घटत्वाद्यवस्थापन्नस्य तस्यैव ॥ सोकामयत । बहु स्यां प्रजायेयेति ॥ [ तै ॥ २ ॥ ६ ॥ २ ॥ ] तदैक्षत बहु स्यां प्रजायेयेति तत्तेज ऐक्षत बहु स्यां प्रजायेयेति [ ॥ छां ॥ ॥ ६ ॥ २ ॥ ३ ॥ ] ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति [ ॥ छां ॥ ६ ॥२॥ ४ ॥ ] इत्यादिश्रौतव्यवहारबलाद्ब्रह्मणः स्वरूपतो नित्यत्वेपि नानाविधस्थूलचिदचिच्छरीरकत्वरूपबहुत्वावस्थापन्नस्य त

स्य प्रागभावप्रतियोगिताया उत्पत्तिमत्त्वस्य च स्वीकारे क्षतिविरहात् ॥ ११ ॥ यथा च मृद्द्रव्यस्य प्रागेव सत्त्वेपि घटत्वाद्यवस्थाविशिष्टस्य तस्य प्रागसत्त्वेन प्रागभावप्रतियोगित्वम्। स्वाधिकरणक्षणध्वंसाधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्वाधिकरणत्वोभयसम्बन्धावछिन्नाधेयतासम्बन्धेन स्वपूर्वक्षणावृत्तित्वस्ववृत्तित्वोभयसम्बन्धेन वा क्षणविशिष्टावस्थावत्त्वरूपमुत्पत्तिमत्त्वंचाबाधितम् तथैव ब्रह्मणोपि प्रागेव सत्त्वेपि स्थूलचिदचिच्छरीरकत्वलक्षणावस्थाविशिष्टस्य तस्य प्रागसत्त्वेन तदुभयं सम्भवत्येवेति न तत्र किञ्चिदनुपपत्तिमुपलभामहे ॥१२॥किं बहुना।द्रव्यस्योत्तरोत्तरसंस्थानयोगःपूर्वपूर्वसंस्थानसंस्थितस्य विनाशः। स्वावस्थस्यतूत्पत्तिरित्येवोत्पत्तिविनाशयोर्विवेकस्य सत्कार्यवादिवेदान्तिसिद्धान्तसिद्धतया तत्तदवस्थाविशिष्टानां द्रव्याणां या उत्पत्तिविनाशादिलक्षणा अवस्थास्सम्प्रतिपन्नास्ता एव विशिष्टस्य ब्रह्मणोपि तादृशावस्था इति घटत्वाद्यवस्थापन्नद्रव्यस्येव विशिष्टस्य ब्रह्मणोप्युत्पन्नत्वाविनष्टत्वव्यवहारा इष्टा एव ॥ १३ ॥ अत एव प्रागुदाहृतविष्णुपुराणश्लोकयोः। उपसंह्रियतेच । अत्ति चेति संहारक्रियाकर्मत्वरूपविनाशावस्थाव्यवहारोपि ब्रह्मणो दर्शितः ॥ १४ ॥ एवमेव जीवात्मनामपि तत्ताद्विशेष-

णविशिष्टानामुत्पत्तिविनाशाद्यवस्थास्तद्व्यवहाराश्चेष्टा एव ॥ १५ ॥ अत एव हि । देवो जातः । मनुष्यो जातः । चैत्रो नष्टः । मैत्रो नष्टः । इत्यादि व्यवहारास्सर्वतः प्रसिद्धाः ॥ १६ ॥ ते च व्यवहारा विशिष्टविषया अर्थबाधाभावादेव मुख्याः ॥ १७ ॥ ब्रह्मणो जीवात्मनां चोत्पत्तिविनाशादिलक्षणविकारशून्यत्ववादास्तेषां स्वरूपस्य साक्षात्सम्बन्धेन विकारशून्यत्वप्रतिपादनपरा इति न कश्चिद्विरोधः ॥ १८ ॥ सर्व एवात्मानो व्युच्चरन्तीति श्रुतौ व्युच्चरन्तीति शब्दोदितोत्पत्तेरप्यात्मसुमुख्यत्वापादनं तु तच्छ्रुतिस्वरूपतदर्थानभिज्ञतानिबन्धनम् । बृहदारण्यकोपनिषदि चतुर्थाध्याये प्रथमब्राह्मणे विंशखण्डिकागतायास्तस्याः श्रुतेः । यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकास्सर्वे देवास्सर्वाणि भूतानि व्युच्चरन्तीत्येवमानुपूर्वीकाया एव दर्शनेन त्वदुक्तानुपूर्व्या एव तत्रादर्शनात् । भवदीयभाष्यकारोदाहृते । सर्व एत आत्मानो व्युच्चरन्तीति पाठान्तरेपि तददर्शनात् ॥ सहोवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्कुत एतदागादिति तदुह न मेने गार्ग्यः बृ० [ ॥ ४ ॥ ॥ १ ॥ १६ ॥ इत्येवंरूपायां प्राक्षोडशखण्डि-

कार्यां कृतस्य । कुत एतदागादिति प्रश्नस्योत्तरभूता यामस्यां श्रुतौ व्युच्चरन्तीत्यस्य सुषुप्तिदशायां परमात्मनि निलीयवर्त्तमानानामुद्गमनमात्रपरत्वे नोत्पत्तिपरताया एवाभावेनोत्पत्तेर्मुख्यत्वौपचारिकत्वविचारस्यैव तत्रानवसराच्च ॥ १९ ॥ एतेन व्युच्चरन्तीत्यत्र जनिकर्तृत्वमात्रमात्मनः श्रूयत इत्यभिधानं तत्रत्यप्रकरणपदार्थादितत्त्वापरिज्ञानमूलमेवेति सिद्धम् ॥ २० ॥ एवं बृहदारण्यकोपनिषादि चतुर्थाध्यायचतुर्थब्राह्मणद्वादशखण्डिकायां षष्ठाध्यायपञ्चमब्राह्मणत्रयोदशखण्डिकायां च श्रूयमाणे । एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यतीति वाक्ये समुत्थाय विनश्यतिशब्दाभ्यामात्मनः प्रतिपन्नयोरुत्पत्तिविनाशयोर्मुख्यत्वापादनमपि विवेचनासहम् ॥ २१ ॥ इदं तावदत्र भवान्प्रष्टव्यः । कस्तावदुत्पत्तिशब्दस्य मुख्यार्थः । को वा विनाशशब्दस्येति ॥ २२ ॥ स्वपूर्वक्षणावृत्तित्वस्ववृत्तित्वोभयसम्बन्धेन क्षणविशिष्टत्वमुत्पत्तिः । सैव च घट उत्पद्यत इत्यादिव्यवहारगोचरः । प्रध्वंसाभावो विनाशः । स एव च घटो विनश्यतीत्यादिव्यवहारगोचर इति चेन्न । दर्शितरीतेरसत्कार्यवादिनैयायिकमते सम्भवेपि सत्कार्यवादिवेदान्तिमते सम्भवात् ॥ २३ ॥ पूर्वमुत्तरं च

सत्यामेव मृदि । घटत्वावस्थारम्भकाले घट उत्पद्यत इति । तद्विरोधितदुत्तरावस्थान्तरारम्भकाले घटो विनश्यतीति च व्यवहारयोस्सत्कार्यवादिसम्मततया घटत्वावस्थाश्रयद्रव्यस्य तादृशावस्थातः प्राक् तद्विरोधितदुत्तरावस्थान्तरारम्भकाले च सत्त्वात्तादृशव्यवहारयोर्निर्वाहो हि नसम्भवति ॥ २४ ॥ यदि च प्राग्द्वादशावान्तरवाक्योक्तरीत्या क्षणविशिष्टावस्थावत्त्वमेवोत्पत्तिः । इत्थं च घटत्वावस्थारम्भकाले घट उत्पद्यत इति व्यवहारस्य नानुपपत्तिः । एवं वर्तमानकालवृत्तिप्रागभावप्रतियोगित्वरूपभविष्यत्त्वविषयस्य घटो भविष्यतीत्यादिव्यवहारस्य बलेन मृद्द्रव्यस्य प्रतियोगिनः प्राक् सत्त्वेपि घटत्वावस्थाविशिष्टस्य तस्य तदानीमसत्त्वेन प्रागभावस्वीकारवत् । वर्तमानकालवृत्तिध्वंसप्रतियोगित्वविषयस्य घटो नश्यतीत्यादिव्यवहारस्य बलेन तत्काले घटत्वावस्थानिवृत्त्यावस्थान्तरापन्नस्य मृद्द्रव्यस्य प्रतियोगिनस्सत्त्वेपि घटत्वावस्थाविशिष्टस्य तस्यासत्त्वेन तादृशस्य तस्य प्रध्वंसाभावलक्षणपश्चादभावस्वीकारेपि न काचिदस्ति क्षतिः । युक्तं चैतत् । विशेष्यसत्त्वेपि विशिष्टाभावस्यैकसत्त्वेप्युभयाभावस्य च सर्वतान्त्रिकसम्मततया प्रतियोगितावच्छेदकविशिष्टेनैवाभावस्य विरोधात् । इत्थं च घटो

नश्यतीत्यादिव्यवहारस्य नानुपपत्तिरित्युच्यते॥२५॥ तदा शरीरविशेषसंयोगाख्यावस्थारम्भदशायामात्मनो प्युत्पत्तिव्यवहारः। तद्वियोगलक्षणावस्थारम्भदशायां विनाशव्यवहारश्च मुख्य एव निर्वहतीति प्रागुदाहृतश्रुतिवाक्येप्यात्मन उत्पत्तिविनाशव्यवहारयोर्मुख्यत्वापादनमयुक्तम्। तन्मुख्यतायास्तत्रेष्टत्वात् ॥ २६ ॥ यदि पुनः। घटोत्पत्तिदशायां मृदुत्पद्यत इति। तद्विनाशदशायां मृद्विनश्यतीति च व्यवहारयोर्वारणाय प्रथमव्यवहारे धर्मिपारतन्त्र्येणोद्देश्यतावच्छेदकेविधेयस्याभेदेन द्वितीयव्यवहारेऽवच्छेदकतासम्बन्धेन चान्वय उपगन्तव्यः। तदुपगमे च मृत्त्वावस्थायां घटत्वाभेदस्य घटध्वंसप्रतियोगितावच्छेदकत्वस्य च बाधादेव घटोत्पत्तिकाले मृदुत्पद्यत इति व्यवहारस्य घटविनाशकाले मृद्विनश्यतीति व्यवहारस्य च नापत्तिः। इत्थं च प्रागुदाहृतश्रुतिवाक्ये प्रथमस्थलस्थे विज्ञान घन इति शब्देन द्वितीयस्थलस्थे तस्मिन् प्रज्ञानघन शब्देन च विज्ञानस्वरूपत्वस्य तत्र प्रतिपन्नोत्पत्तिविनाशान्वयितावच्छेदकतया बोधनात्सार्वकालिके तस्मिन्नुत्पत्त्यभेदस्य विनाशप्रतियोगितावच्छेदकतायाश्च बाधेन तत्रत्यतादृशव्यवहारयोरावश्यकमेवौपचारिकत्वमित्युच्यते॥२७॥ तदापि नास्माकं काचिदस्ति क्षतिः। भवदुक्तहेतोरेवोक्तव्यवहारयोरत्र मुख्यत्वा-

पादनायोगात् । दर्शितहेतुनाऽत्रानयोर्व्यवहारयोर्मुख्य त्वासम्भवमात्रेण जगदुपादानकारणतानिर्वाहकतया ब्रह्मण्यस्मदुपपादितस्योत्पत्त्यादेर्बाधकानुपलम्भाच्च ॥ ॥ २८ ॥ किं च । धर्मितावच्छेदकस्य विशेषणविधया भानतात्पर्यस्थले तत्र विधेययोर्धर्मिपारतन्त्र्येण दर्शितभानविशेषावश्यकत्वेपि तत्र तथा भानतात्पर्या स्वीकारे तथाविधभानविशेषनिर्बन्धाभावेन तत्रत्योत्प त्तिविनाशव्यवहारयोः शरीरसंयोगवियोगावस्थापरत या मुख्यत्वस्वीकारेपि वा नास्तिकाचिदनुपपत्तिः ॥ ॥ २९ ॥ किं बहुना । दर्शितस्थले धात्वर्थभूतयोरुत्प- त्तिविनाशयोर्दर्शितरीत्या मुख्यत्वं वा भवत्वौपचारि- कत्वं वा । सर्वथाऽत्र कर्त्रा ख्यातश्रुतिबाधप्रसङ्गले- शोपि नोपलभ्यत इति तत्प्रसङ्गभियाऽऽत्मनाम्मुख्यो- त्पत्तिविनाशस्वीकारापादनमिदमव्युत्पन्नकृत्यमेव ३० न जायते म्रियते वेत्यादिश्रुतयस्तु साक्षात्सम्बन्धेनो- त्पत्तिविनाशादिविकाराभावपरा इति प्रागेवासकृदुपपा दितम् ॥ ३१ ॥ स वा अयं पुरुषो जायमानश्शरीरम- भिसम्पद्यमानः पाप्मभिस्सꣳसृज्यते स उत्क्रामन्म्रिय- माणः पाप्मनो विजहाति [ बृ ॥ ६ ॥ ३ ॥ ८ ॥ ] इति बृहदारण्यकषष्ठाध्यायाष्टमखण्डिकारूपा श्रुति- राप प्राकृतशरीरसंयोगवियोगनिबन्धना एवात्मनां

जन्मविनाशादयस्सर्वे विकाराः । न स्वरूपप्रयुक्ता इत्येतावन्मात्रपरैव न पुनर्जन्मविनाशयोरौपचारिकत्वपरेति न तत्र कश्चिद्विरोधः ॥ ३२ ॥ न च ब्रह्मणि कारणत्वनिर्वाहाय भवदङ्गीकृतानामुत्पत्तिविनाशादिविकाराणां सद्वारकत्वमस्वाभाविकत्वं चेत्येतदेवौपचारिकत्वम् । ततो ब्रह्मणोप्यौपचारिकमेव भवत्युपादानत्वम् । न मुख्यमिति वाच्यम् । विकारसम्बन्धित्वे मुख्यत्वौपचारिकत्वयोर्वृत्तिनियामकसम्बन्धावच्छिन्नाधिकरणतात्मकत्वतदभावमात्ररूपत्वात् ।कारणत्वस्य मुख्यत्वामुख्यत्वयोः कार्यनिर्वाहकशक्तिसद्भावासद्भावमात्रनिबन्धनत्वात् । तत्तद्व्यपदेशानां मुख्यत्वामुख्यत्वयोश्शब्दसम्बन्धिशक्तितद्भिन्नवृत्तिभ्यां तत्तदथापस्थापकत्वमात्ररूपत्वाच्चात्र कस्याप्यौपचारिकताया दुर्वचत्वात् ॥ ३३ ॥ विकाराणां वृत्तिनियामकसम्बन्धेन ब्रह्मणि सत्ता । कार्यनिर्वाहकशक्तिविशेषसद्भावः। तदवगमकश्रुतिस्मृत्यादिप्रमाणजातम् । श्रौतस्मार्ततत्तन्मुख्यव्यपदेशाश्च प्रागेवोपापादिषत ॥ ३४ ॥ तथाचास्मन्मते ब्रह्मण उपादानकारणत्वं मुख्यमेव सुष्ठूपपन्नं भवति ॥ ३५ ॥ उत्पत्तिविनाशव्यवहारसम्बन्धिनोऽपरेप्यत्र वक्तव्या विशेषाद्वितीयचतुर्थमयूखयोर्वक्ष्यन्ते ॥ ३६ ॥ बहूनामन्येषां भवदुक्तानामस-

म्बद्धविकल्पादिप्रलापानामस्मदीयसिद्धान्तसम्बन्ध-
गन्धाभावस्य स्फुटमेव व्युत्पन्नमात्रधीगोचरतया न ते
विचारणीयकोटौ निविशन्त इत्युपेक्षिताः ॥ ३७ ॥
तस्माद्ब्रह्मणो जगत्कारणत्वप्रतिपादननिबन्धनपरस्प-
रविरोधाद्यनर्थपरम्परात्वन्मतभाष्यकारमस्तक एव
दुष्परिहरा दुर्भरा च निपततीति सिद्धं भवतीति ॥
॥ १३७ ॥ इतिश्रीवेङ्कटाद्रिश्रीमदनन्तपूरुषा-
चार्यसिंहासनासीनश्रीरङ्गाचार्यकृतौकुदृष्टिध्वान्तमा-
र्त्तण्डेविरोधवरूथिनीप्रमाथिनिप्रथमोमयूखः ॥

---

